[श्री गणेशाय नमः]

श्रीलक्ष्मीधरविरचितः

# कृत्यकल्पतरुः

## ब्रह्मचारिकाण्डम्

### [प्रार्थना]

[विष्णुः]

देवः स्फुरन्महिमतत्तदनन्तमत्स्य-
कूर्मादिजन्मकथिताद्भुतवैभवो यः।
ब्रह्माण्डबुद्बुदमयो स्फुरदंशलेशः
मायामपोहतु स बोधमहोदधिर्वः ॥ १ ॥

[शिवः]

जाने यस्य ललाटलोचनशिखा लेखाऽपि चान्द्री विभो
रंमाशी ममयं (?) जगज्जनयितुं बीजाय संजायते।
तस्योर्मिव्यपयोगियोगिजनताहृत्पद्मसद्मस्थित-
स्फारध्वान्तहरं हरस्य दहरस्थानं महामो महः ॥ २ ॥

[मनुः]

सुहृद्यः सुकृतारण्यक्षीरनीरविवेचनः।
म..मानसमाविश्य राजहंसः पुनातु वः ॥ ३ ॥

[राज्ञः प्रशंसा]

ः।मन्मानवव।ःवस्स विजयी गोविन्दचन्द्रोऽस्ति यः
क्रीडातर्जितगौडगर्जित[भ]यस्तम्भीभव[त्पार्थिवः]।
सर्वोर्वी ः जयप्रतिश्रुतिवियत्सङ्कोचनाशङ्किना
येनात्मापि जितस्ततश्शमभृता मन्ये किमन्ये परे ॥ ४ ॥
एष ज्ञानपराक्रमैःवसति गोविन्दचन्द्रः परं
कन्दर्पस्य च वैरिणां च विशिखैः रक्तोऽमितः शोभते।
मायामप्यवनीशमण्डलमपि स्वच्छन्दमुच्छिन्दता
ःःः कृतिना दिनैः कतिपयैरद्वैतमारोपितः ॥ ५ ॥
कोशान् गे ःवमुञ्चन् पथि करिःरगान् बान्धवानर्धमार्गे
दुर्गे त्वन्तःपुराणि प्रतिरवचकिताः पर्वतेभ्यो निवृत्ताः।
यःःःगे द्रवन्तेऽसमसमरसमारम्भगम्भीरभेरी-
भांकाराकीर्णकर्णज्वरभरतरलप्रेक्षिताः शात्रवेशाः ॥ ६ ॥
स किल सकलदृप्तक्षत्रनक्षत्रलक्ष्मी-
हरणकिरणमाली कस्य न स्यान्नमस्यः।
असमसमरसम्पल्लम्पटः शौर्यभाजा-
मवधिरवधि युद्धे येन हम्मीरवीरः ॥ ७ ॥

[ग्रन्थकर्तुः प्रशंसा]

विद्याव।ःविलासभूःःः वीरस्य विप्रोत्तमः
श्रीलक्ष्मीधर इःःःःःः तस्यास्ति मन्त्रीश्वरः।
भूभर्तुः पदःःःःमैथुनक्रीडार्थमासूत्रिता
येनानेकनरेन्द्ररत्नमुःटज्योतिर्मयी वाहिनी ॥ ८ ॥
हुत्वा लक्षमर।।तभूपतिशिरःपद्मानि शौर्यानले
पृथ्वीं साधयता सःद्रवसनां श्रीदेवकाशीपतेः।

एतेनात्म[illegible]धकेन कति न क्रूराशयाः प्रापिताः
संग्रामव्रतनैष्ठिकेन विलयं विद्यार्थिना पार्थिवाः ॥ ९ ॥

[ग्रन्थस्य प्रशंसा]

तेनायं वेदमूलः स्मृतिनिचयमयस्कन्धवान् यः पुराण-
व्यूहव्युत्पन्नशाखः प्रकरणनिकरोद्दण्डकाण्डप्रचण्डः ।
उन्मीलच्छ्राव्यपत्रः स्फुरदतिविशदज्ञानरम्यः प्रसूनः
श्रीमद्धर्मार्थकामामृतमयफलदस्तन्यते कल्पवृक्षः ॥ १० ॥
पौराणीरेव वाणीः क्वचिदकृत कृतौ क्वापि भूयः स्मृतीनां
गोपालस्तद्द्वयस्यः स्वकृतिविरचनं वाक्यरूपेण चक्रे ।
श्रौतस्मार्तादिसारैर्विबुधजनमनोहारि कारिष्यतेऽयं
मीमांसोत्तंसितार्थैरपृथुरथ कथातीतरन्ध्रः प्रबन्धः ॥ ११ ॥
यस्योत्थितौ स्थितिमती न महार्णवे श्रीः
निद्रां दधाति यदधः किल कामधेनुः ।
तस्यातनिष्यति रतिं विबुधद्विजानां
आनन्दनः किमु न कल्पतरोः प्ररोहः ॥ १२ ॥
का चिन्तैव महार्णवानुसरणे का कामधेनुस्पृहा
क्षुद्राः कस्य पारस्फुरन्ति हृदये ते रत्नमालादयः ।
श्रीलक्ष्मीधरबुद्धिवैभवसुधासेकप्रभावादयं
येनात्रैव जगत्त्रयोपकृतये कल्पद्रुमः कल्पते ॥ १३ ॥
एकार्थेष्वेकमेकं क्वचिदपरमपि स्वीकृतं कार्ययोगात्
न्यस्तं विज्ञानमूलं प्रचरदपि परित्यक्तमज्ञानमूलम् ।
[illegible]गृहीतं वचनमभिहितं स्पष्टितं चा[illegible]र्थे
यत्रापारो विरोधः स्फुरति विरचिता तेन तत्र व्यवस्था ॥

लक्ष्मीधरेण मुनिमुख्यवचस्समुद्रं
न्यायाद्रिणा किल विलोड्य समुद्धृतोऽयम् ।
काण्डैश्चतुर्दशभिरद्भुतपर्वबन्धैः
वाञ्छोचितं फलति कल्पतरुर्न कस्य ॥ १५ ॥

[ब्रह्मचारिकाण्डोपक्रमश्लोकः प्रतिज्ञा च]

[1]वित्रस्ताः विमुखाः क्षतेन्द्रियसुखाः[2] क्ष्मातल्पनिद्रालवो
भिक्षावृत्तिजुषस्त्वचा परिचिताः कौपीनमात्राम्बराः ।
नीताः काश्यधिपस्य येन रिपवस्ते ब्रह्मचर्यं परं
काण्डे स प्रथमाश्रमं प्रथमतः प्रस्तौति लक्ष्मीधरः ॥१६॥

कृत्यकल्पतरावाद्ये काण्डेऽस्मिन् ब्रह्मचारिणः ।
स्वरूपफलतो माननिमित्तः धर्मनिर्णयः ॥
परिभाषाथ संस्कारः तथोपनयनक्रिया ।
विधिरा[illegible]थ निमित्तं शौचमेव च ॥
संध्याविध्यग्निकार्ये च अभिवादोपसंग्रहौ ।
मान्या आचार्यगुर्वादिसंज्ञाः तन्माननक्रमः ॥
गुर्वाचार्यानुवृत्तिस्तु पुत्रभार्यानुवर्तनम् ।
इन्द्रियाणां निग्रहश्च नियमा ब्रह्मचारिणा[illegible] ॥
अध्याप्योऽध्यापनविधिः स्वाध्यायदिवसेतरौ ।
अध्येयं चतुराश्रम्यव्यवस्था नैष्ठिकक्रिया ॥
[illegible]णास्नाने इति द्वाविंशति क्रमात् ।
पर्वाण्यभिनिरूप्यन्ते विस्[illegible]तानि विभागशः ॥

1 मूलमातृकायां विशाला:(?)विमुखा: इति.

2 'क्षतेन्द्रियमुखा:' इति मातृकायाम् ।

॥ १ ॥

# धर्मनिर्णयः

अथ स्वरूपफलप्रमाणनिमित्तैः प्रवृत्त्यौपयिकं धर्मनिरूपणम् । तत्र को धर्म इत्यपेक्षायां धर्मस्वरूपफलप्रमाणनिमित्तैः प्रवृत्त्यौपयिकं धर्मनिरूपणम् ।

<u>मनुः</u>—[२, १.]

विद्वद्भिः सेवितः सद्भिः नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥

'[1]विद्वद्भिः' वेदार्थविद्भिः । 'सेवितः' सततमनुष्ठितः । 'सद्भिः' साधुभिः । 'नित्यम्' अनिन्दितं प्रथमतया । 'अद्वेषरागिभिः' विध्यनुमितरागद्वेषशून्यैः । 'हृदयेनाभ्यनुज्ञातो' निर्विचिकित्सं कर्तव्यत्वेनानुमतः ।

<u>विश्वामित्रः</u>[2]

यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः ।
स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते ॥

1 'विद्वद्भिः' वेदार्थविद्भिः । 'सद्भिः' प्रमातृभिः । अनेन विशेषणद्वयेन वेदप्रमापितत्वं लक्ष्यते । 'अद्वेषरागिभिः' निषिद्धफलकरागद्वेषशून्यैः । अनेन बलवदनिष्टाप्रयोजकत्वं लक्ष्यते । 'हृदयेनाभ्यनुज्ञात' इत्यनेन श्रेयस्साधनत्वम् । तत्रैव हि मनोऽभिमुखं भवति । तदयमर्थः—बलवदनिष्टाप्रयोजकत्वे सति श्रेयस्साधनकतया वेदप्रमापितत्वं तत्त्वमिति ॥
(वी. मि. परि., ३०–३१).

2 वी. मि. परि. ३१.

आपस्तम्बः [१, २०, ६–७]

न धर्माधर्मौ चरत 'आवां स्व' इति, न देवा न गन्धर्वा न पितर इत्याचक्षते'ऽयं धर्मोऽयमधर्म' इति।

यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो, यं विगर्हन्ति सोऽधर्मः।

अयमर्थः—आत्मकथनाय सर्वलोकप्रत्यक्षं धर्माधर्मावावां वर्तावह इति ब्रुवाणौ न भ्रमतः[1]।

भविष्यपुराणे[2]

धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्।

'धर्मः श्रेय' इति श्रेयः, धर्मेण तत्साधनं लक्ष्यते। मुख्यं पुनः श्रेयोऽभ्युदयरूपम्।

तदाह 'श्रेयोऽभ्युदयलक्षणम्' इति[3]।

## अथ धर्मविशेषाः

तत्र हारीतः[4]

अथाश्रमाणां पृथग्धर्मो विशेषधर्मः समानधर्मः कृत्स्नधर्मश्चेति। पृथगाश्रमानुष्ठात् पृथग्धर्मो, यथा चातुर्वर्ण्यधर्माः। स्वाश्रमविशेषानुष्ठानाद्विशेषधर्मो[यथा]नैष्ठिकया-

1 वी. मि. परि., ३२.

2 धर्मश्श्रेयस्समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्।
स च पञ्चविधः प्रोक्तो वेदमूलस्सनातनः॥
अस्य सम्यगनुष्ठानात्स्वर्गो मोक्षश्च जायते।
इह लोके सुखैश्वर्यमतुलं च खगाधिप॥ (भविष्यपुराणे)

3 "धर्मः श्रेय इति श्रेयस्साधनमित्यर्थः, मुख्यं पुनः श्रेयोऽभ्युदयरूपमिति कल्पतरुः॥" (कृ. र., ८).

4 वी. मि. परि., ४४; कृ. र., ९.

यावरा॰ज्ञायिकचा॰राश्रम्यसिद्धानाम् । सर्वेषां यः समानः [स समानधर्मः । नैष्ठिकः] कृत्स्नधर्मः ।

'अनुज्ञायिको' वानप्रस्थविशेषः । 'चातुराश्रम्यसिद्धो' अयमिति शेषः । 'नैष्ठिकः कृत्स्नधर्म' [इति । निष्ठा] संसारसमाप्तिः, आत्मज्ञानवतः प्रत्यवायपरीहाराय नित्यनैमित्तिकानुष्ठानमिति यावत् [तत्प्रयोजनको नैष्ठिकः] ॥

धर्म इत्यनुवृत्तौ

भविष्यपुराणे[1]

स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः ।
वर्णधर्मः स्मृतस्त्वेको आश्रमाणामतःपरम् ।
वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा ॥
वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्तते ।
वर्णधर्मः[स]उक्तस्तु यथोपनयनं नृप ॥
यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्त्तते ।
स खल्वाश्रमधर्मस्तु भिक्षादण्डादिको यथा ॥
वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्तते ।
स वर्णाश्रमधर्मस्तु मौञ्जीया मेखला यथा ॥
यो गुणेन प्रवर्त्तेत गुणधर्मः स उच्यते ।
यथा मूर्द्धाभिषिक्त[स्य] प्रजानां परिपालनम् ॥
निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्तते ।
नैमित्तिकः स विज्ञेयः प्रायश्चितविधिर्यथा ॥

'अधिकारो' अत्र धर्मः ।

1 कृ. र., ९-१०.

कालिकापुराणे[1]

इष्टापूर्तौ स्मृतौ धर्मौ श्रुतौ वै शिष्टसंमतौ ।
प्रतिष्ठाख्यं तयोः पूर्तमिष्टं यज्ञादिलक्षणम् ।
भुक्तिमुक्तिप्रदं पूर्तमिष्टं भोगार्थसाधनम् ॥

'[2]प्रतिष्ठाख्यम्' देवताप्रतिष्ठाजलाशयोत्सर्गादि। 'तयोः' [इष्टापूर्तयोः मध्ये]।

श्री महाभारते[3]

एकाग्निकर्महवनं त्रेतायां यत्र हूयते ।
अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते ॥
वापीकूपतडागानि देवतायतनानि च ।
अन्नप्रदानमारामाः पूर्तमार्याः प्रचक्षते ॥

'एकाग्निकर्महवनम्' एकस्मिन्नग्नौ आवसथ्यादौ होम रूपकर्म। 'त्रेतायाम्' अग्नित्रये।

[4]मनुः [१, ८८-९१]

अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥
प्रजानां रक्षणं दानमिज्याध्ययनमेव च ।
विषयेष्वप्रसक्तिं च क्षत्रियस्य समादिशत्[5] ॥
पशूनां रक्षणं दानमिज्याध्ययनमेव च ।

1 कृ. र., १०; वी. मि., परि., ४४.
2 Explanation reproduced by कृ. र. and वी. मि.
3 कृ. र., १०.
4 कृ. र., १२; वीर. मि. परि, ४५.
5 'समादिशत्' इति मेधातिथिचण्डेश्वरयोः पाठः। गोविन्दराजकुल्लूकमित्रमिश्राणां पाठस्तु 'समासतः' इति ।

[1]वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥

'विषयाप्रसक्तिः' इन्द्रियविजयः । 'वणिक्पथम्' वाणिज्यम् । 'कुसीदम्' वृद्ध्यर्थं धनप्रयोगः[2] ।

महाभारते[3]

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥

'विज्ञानम्' यज्ञादिकर्मकौशलम्[4] ।

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म[5]स्वभावजम्[6] ॥

'शौर्यम्' विक्रमशीलत्वम् । 'तेजः' अधृष्यतौपाधिको गुणविशेषः[7] । 'दाक्ष्यम्' उत्साहः । 'ईश्वरभावः' प्रभुत्वम् ।

कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ।

1 'वाणिज्यार्थं' इति मूलमातृकायाम्.

2 'ऋणप्रयोगः' इति चण्डेश्वरः, कृ. र. परि., १२.

3 भगवद्गीता, १८, ४१-४२. These verses are cited by कृ. र., १३ as from भविष्यपुराण.

4 "'ज्ञानं' परावरतत्त्वयाथात्म्यज्ञानम् । 'विज्ञानं' परतत्वगतासाधारणविशेषविषयं ज्ञानम् ।" इति श्रीरामानुजभाष्ये ।

5 'क्षात्रं धर्म' इति मूलमातृकायाम्.

6 भ. गी., १८, ४३.

7 'तेजः' परैरनभिभवनीयता (श्रीरामानुजभाष्ये.)

परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्[1] ॥

'गोरक्षम्' पशुपाल्यम्।

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः[2]।

तथा—[१८, ४७]

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥

'स्वधर्मः' स्ववर्णाश्रमधर्मः।

महाभारते[3]

आनृशंस्यमहिंसा चाप्रमादः संविभागिता।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥
स्वेषु दारेषु सन्तोषः शौचं नित्यानुरूपतः।
आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप[4] ॥

'आनृशंस्यम्' अक्रूरत्वम्। 'आत्मज्ञानम्' नित्यत्वज्ञानम्। 'तितिक्षा' क्षमा।

## तथा साधारणो धर्मः

विष्णुः [२, १६–१७]

क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं तथा ॥

1 भ. गी. १८, ४४.

2 भ. गी., ३, ३५.

3 Cited as from भविष्यपुराण in कृ. र., १४.

4 'आनृशंस्यं' अक्रूरत्वम्। 'आत्मज्ञानं' नित्यत्वज्ञानमन्यस्य पाषण्डेऽपि सत्वात्। 'तितिक्षा' क्षमा ॥ (कृ. र., १४) 'आत्मज्ञानं' शरीरादिभिन्नत्वेनात्मविवेकः (वी. मि. परि., ३३).

आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।
अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥

'सामान्यः' चतुर्णामपि वर्णानाम् ।

बृहस्पतिः [संस्कार, ४८९]

दया क्षमाऽनसूया च शौचानायासमङ्गलम्[1] ।
अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च ॥

श्रीमहाभारते

सत्यं दमस्तपः शौचं सन्तोषो ह्रीः क्षमार्जवम् ।
ज्ञानं शमो दया दानं एष धर्मस्सनातनः[2] ॥

देवलः

शौचं दानं तपः श्रद्धा गुरुसेवा क्षमा दया ।
विज्ञानं विनयः सत्यमिति धर्मसमुच्चयः ॥

याज्ञवल्क्यः [१, ८]

इज्याचारदयाहिंसादानस्वाध्यायकर्मणाम् ।
अयं स परमो धर्मो यद्योगेनात्मदर्शनम्[3] ॥

[4]बृहस्पतिः [संस्कार, ४९०, ४९२, ४९३, ४९५, ४९६, ४९८–५००]

परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।

1 'शौचानायासमङ्गलम्' इति मित्रमिश्रपाठः (वी. मि. परि., ३२) । चण्डेश्वरोऽप्येवम् (कृ. र., १४) 'शौचानाशासमङ्गलम्' इति मूलमातृकायाम् .

2 'सनातनः' कालमात्राधिकारको न ब्राह्मणत्वाद्यधिकारान्तरापेक्ष इत्यर्थः (वी. मि., परि., ३२).

3 'योगो' बाह्यविषयकचित्तवृत्तिनिरोधः । 'परमः' देशकालजात्याद्यनपेक्षः सन्परमपुरुषार्थसाधनम् (वी. मि., परि., ३६) ॥ 'योगेनात्मज्ञाने देशादिनियमो नास्ती'ति विज्ञानेश्वरः ।

4 कृ. र., १५–१६.

आपन्ने रक्षितव्यं तु दयैषा परिकीर्तिता ॥
बाह्ये वाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् ।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥
न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि ।
नान्यदोषेषु रमते सानसूया प्रकीर्तिता ॥
अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः ।
स्वधर्मे च व्यवस्थानं शौचमेतत्प्रकीर्तितम् ॥
शरीरं पीड्यते येन सुशुभेनापि कर्मणा ।
अत्यन्तं तन्न कर्तव्यमनायासः स उच्यते ॥
प्रशस्ताचरणं नित्यमप्रशस्तविसर्जनम् ।
एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्वदर्शिभिः ॥
स्तोकादपि हि दातव्यमदीनेनान्तरात्मना ।
अहन्यहनि यत् किञ्चिदकार्पण्यं[हि]तत्स्मृतम् ॥
यथोत्पन्नेन संतोषः कर्तव्यो ह्यथ वस्तुना ।
परस्याचिन्तयित्वार्थं सास्पृहा परिकीर्तिता ॥

[1]महाभारते

सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः ।
तपः स्वधर्म[2]वर्तित्वं शौचं सङ्करवर्जनम् ॥
संतोषो विषयत्यागो ह्रीरकार्यनिवर्तनम् ।
क्षमा द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता ॥
ज्ञानं तत्वार्थसंबोधः शमश्चित्तप्रसन्नता[3] ।

1 कृ. र., १६.
2 सुकर्मवर्तित्वमिति कृ. र. पाठः
3 'समचित्तं प्रशान्तता' इति मूलमातृकायाम्.

दया भूतहितैषित्वं ध्यानं निर्विषयं मनः[1] ॥

देवलः

व्रतोपवासनियमैः शरीरोत्तापनं[2] तपः ॥

तथा

प्रत्ययो धर्मकार्येषु तथा श्रद्धाभ्युदाहृता ।
नास्ति ह्यश्रद्धधानस्य धर्मकार्यप्रयोजनम्[3] ॥

देवीपुराणे

कायक्लेशैर्न बहुभिर्न चैवार्थस्य राशिभिः ।
धर्मः संप्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि[4] ॥

देवलः

विगर्हातिक्रमाक्षेपहिंसाबाधवधात्मनाम् ।
अन्यमन्युसमुत्थानदोषाणां मर्षणं क्षमा[5] ॥

तथा

स्वदुःखेष्विव कारुण्यं परदुःखेषु सौहृदम् ।
दयेति मुनयः प्राहुरनुक्रोशं च जन्तुषु ॥

1 'भूतहितं' प्राण्यनुकूलम् । 'प्रोक्तं' यथार्थवचनम् । अप्राणिपीडनकरं यथार्थवचनं सत्यमिति मिताक्षरापि । 'दमनं' वशीकरणम् । 'द्वन्द्वं' कलहः तस्मिन्सत्यपि सहिष्णुता । अपकारेऽपि चित्तस्याविकारः क्षमा इति मिताक्षरा । 'प्रशान्तता' विरक्तिः ॥ (वी. मि. परि., ३४.)

2 'शरीरतपनं तपः' (कृ. र., १६); 'शरीरोत्तापनं' वी. मि., परि., ३४.

3 'धर्मकृत्ये प्रयोजनम्' (कृ. र., १६); 'धर्मकृत्यप्रयोजनम्' इति वी. मि., परि., ३४.

4 वी. मि. परि., ३४; कृ. र., १६.

5 'दोषाणां मर्षणं क्षमा' इति वी. मि., ३५, कृ. र. १७ : । 'कर्षणं क्षमा' इति मूलमातृकापाठः । 'क्षेपो' गलहस्तादिना प्रेरणम् । वधोऽत्र ताडनमात्रम् । हिंसायाः पृथगुपादानात् । सापि शोणितोत्पादादिमात्रापरा, न प्राणवियोगपर्यन्ता । अन्यथा मर्षणासंभवात् ॥ (वी. मि., परि., ३५.)

यत्पुनर्वैदिकीनां च लौकिकीनां च सर्वशः।
धारणा सर्वविद्यानां विज्ञानमिति कीर्त्यते ॥
विनयं द्विविधं प्राहुः शश्वद्दमशमावपि।
[1]शरीरोपरतिः शान्तिर्ज्ञानं प्रज्ञाप्रसादजम् ॥
श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

दक्षः

यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता।
सुखदुःखानि तुल्यानि यथात्मनि तथा परे[2] ॥

## अथ फलतो धर्मनिरूपणम्

तत्र मनुः—[२, ९]

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्[3] ॥

'अनुत्तमं सुख'मिति यथाप्राप्ततत्तत्फलोपलक्षणार्थम्[4]।

गौतमः—[११, ३१-३२]

वर्णाश्रमाश्च स्वस्वधर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्ट[देश]जातिकुलरूपायुःश्रुतवृत्त[वित्त]-सुखमेधसो जन्म प्रतिपद्यन्ते। विष्वञ्चो विपरीता नश्यन्ति।

1 'शरीरोपरतिः' शरीरस्य वृथा चेष्टाराहित्यम् (वी. मि., परि., ३५.)
2 'अत्र सामान्यानिर्देशात् साधारणधर्मपरत्वं द्वयोर्वाक्ययोः प्रतीयते' (वी. मि., परि., ३५.)
3 'अनुत्तमां गतिम्' इति कुल्लूकपाठः; 'अनुत्तमं सुखम्' इति मेधातिथिपाठः
4 वी. मि., परि., ६१; कृ. र., १८.

'ततः शेषेणे'ति तस्यैव कर्मणः शेषेणेति भर्तृयज्ञः। तस्मादन्येन शेषेण कर्मणेति भट्टपादाः। यदाहुः गौतमीयेऽपि तच्छेषस्तस्माच्चित्ताद्यपेक्षयेति। मेधस इति, सकारान्तं वीर्यवाची। 'विष्वञ्चः' सर्वतो गामिनः। यथेष्टचेष्टा इति यावत्। 'विपरीता' नरकादौ पापफलमनुभूय 'नश्यन्ति' विरुद्धदेशादौ जन्म प्रतिपद्य पापरता भवन्ति[1]।

आपस्तम्बः—[२, २, २–५]

सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम्। ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रपद्यन्ते। तच्चक्रवदुभयलोकयोः सुख एव वर्तते। यथौषधिवनस्पतीनां बीजस्य क्षेत्रे कर्मविशेषेण फलवृद्धिरेवम्। एतेन दोषफलपरिवृद्धिरुक्ता।

'परम्' श्रेष्ठम्। 'अपरिमितम्' चिरकालानुवृत्ति। 'परिवृत्तिः' पुनरावृत्तिः। 'कर्मफलशेषेण' कर्मफलसाधनशेषेणेत्यर्थः[2]। एतच्च नित्यानामेव कर्मणां फलान्तरमिति कपर्दि-

1 वीरमित्रोदये इत्थं व्याख्यातम् (पृ. ६०–६१)—'वर्णाः' ब्राह्मणादयः। 'आश्रमाः' ब्रह्मचार्यादयः। ते स्वधर्मनिष्ठा वर्णाश्रमोभयप्रयुक्तधर्माननुतिष्ठन्तः, 'प्रेत्य' मृत्वा, लोकान्तरं गत्वा, तत्तत्कर्मफलमनुभूय, अनन्तरं 'शेषेण' भुक्तावशिष्टेन पुण्यकर्मणा, प्राप्तविशिष्टदेशादिका भूत्वा जन्म प्रतिपद्यन्ते। अत्र 'विशिष्ट' शब्दः सर्वैः देशादिभिः संबध्यते। . . . . 'मेधा' ग्रन्थार्थयोः ग्रहणशक्तिः। अत्र 'मेधा' शब्दे सकारान्तत्वं आर्षम्। 'सुमेधसो' 'दुर्मेधसो' इत्यादौ दर्शनात्। कल्पतरुस्तु सकारान्तं शब्दान्तरं वीर्यवाचीति व्याख्यातवान्। 'विष्वञ्चः' सर्वतो गामिनः यथेष्टचेष्टा इति यावत्। अनेन निषिद्धकारिण उक्ताः। 'विपरीताः' वर्णाश्रमत्यागिनः। अनेन विहिताकारिणः उक्ताः। 'नश्यन्ति' नरकादौ पापफलमनुभूय भुक्तावशिष्टेन पापकर्मणा विरुद्धदेशादौ जन्म प्रतिपद्य पापरता भवन्तीत्यर्थः।

2 'कर्मफलशेषेण' कर्मफलसाधनशेषेणेति कल्पतरुः। कर्मफलमपूर्वं, तच्छेषेण इति रत्नाकरादयः [वी. मि., परि., ६२.]

भाष्यम्। 'तत्' तस्मात् 'सुख एव वर्तते' न दुःखम्। क्षेत्रे बीजस्योप्तस्य [कर्षणादिना यथा] फलपरिवृद्धिः सर्वतः परिमाणतः वीर्यादिभिर्वृद्धिः तथा आवश्यककर्मानुष्ठातरि पुरुषे।

तथा मनुः—[४, १५६]

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम्॥

'आचारः' आवश्यकं कर्म। 'अक्षय्यम्' अतिप्रभूतमित्यर्थः। 'अलक्षणम्' अशुभसूचकदेहचिह्नं स्कन्धादौ[1] तिलकालकादि तत्सूचितमधर्ममनारब्धफलं हन्तीत्यर्थः।

मनुवसिष्ठयमाः[2]—[मनु, ४, १५८; वसि. ६, ८]

सर्वलक्षणहीनोऽपि यः सदाचारवान् नरः।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति॥

हारीतः—[वसिष्ठ, ६, १]

आचारः परमो धर्म इति वेदविदो विदुः।
न ह्यनाचारिणो लोकान् प्रवदन्ति मनीषिणः॥

तथा

काम्यैः केचिद्यज्ञदानैस्तपोभि-
र्लब्ध्वा लोकान् पुनरायान्ति जन्म।
कामैः मुक्ताः सत्ययज्ञाः सुदाना-
स्तपोनिष्ठा अक्षयान् यान्ति लोकान्॥

1 कृ. र., २०.
2 कृ. र., २१; मनु., ४. १५८, वसिष्ठ., ६, ८.

एतेन कामनासदसद्भावनिबन्धनः फलभेदो दर्शितः[1]।

भविष्यपुराणे[2]

फलं विनाप्यनुष्ठानं नित्यानामिष्यते स्फुटम्।
काम्यानां स्वफलार्थं तु दोषघातार्थमेव च॥
नैमित्तिकानां करणं त्रिविधं कर्मणां फलम्।
क्षयं केचिदुपात्त[स्य] दुरितस्य प्रचक्षते॥
अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्यते।
नित्यक्रियां तथा चान्ये अनुषङ्गफलं श्रुतिम्॥

अत्र बृहस्पतिः—[संस्का., ११, २२९]

श्रुतिस्मृती चक्षुषी द्वे द्विजानां न्यायवर्त्मनि[3]।
मार्गे मुह्यन्ति तद्धीनाः प्रयतन्ति पथश्च्युताः॥

'न्यायवर्त्मनि' न्यायार्थे, धर्म इति यावत्[4]।

अत्र मनुवसिष्ठौ—[मनु, ४, १५७, वसिष्ठ, ६, ६]

दुराचारो हि पुरुषो लोके भवति निन्दितः।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च॥

'दुराचारो' निन्दिताचारः।

आपस्तम्बः—[१, १२, ११–१२]

यत्र [तु] प्रीत्युपलब्धितः प्रवृत्तिर्न त्वत्र शास्त्रमस्ति। तदनुवर्त[मानो] नरकाय राध्यति॥

1 कृ. र., २१; वी. मि., परि., ६५.
2 कृ. र., २१; वी. मि., परि., ६५.
3 "'न्यायो न्याय्यो धर्म' इत्यर्थः, स एव 'वर्त्म', स्वर्गनरकप्राप्तिहेतुत्वात्।" (कृ. र., २४.)
4 कृ. र., २४.

'यत्र प्रीत्युपलब्धितः' इति। लौकिकप्रमाणतः प्रीतिसाधन[त्व]ज्ञानाद्यत्र प्रवर्तते, न तत्र शास्त्रव्यापारः। 'नरकाय राध्यति' नरकवशो भवति। 'रध्यतिर्वशगमन' इति निरुक्तकारवचनात्। (निरुक्त, ६, ३२)

अङ्गिराः

स्वाभिप्रायकृतं कर्म यत्किञ्चित् ज्ञानवर्जितम्।
क्रीडाकर्मे च बालानां तत्सर्वं निष्प्रयोजनम्॥

'ज्ञानवर्जितं' शास्त्रीयज्ञानवर्जितम्।

आपस्तम्बः—[१, २०, १-२]

नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत्। निष्फला ह्यभ्युदये भवन्ति।

'इमं' धनकीर्त्यादिकम्; 'पुरस्कृत्य' उद्दिश्य; 'अभ्युदये' शास्त्रीयफलविषये।

मनुः—[४, २४२]

तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः।
धर्मेण हि सहायेन तमस्तरति दुस्सहम्॥

'तमः' पापम्।

तथा—[४, १७१]

सीदमानो हि धर्मेण मनो धर्मे न वारयेत्।
अधार्मिकाणां पापानामाशु पश्यन् विपर्ययम्[1]॥

1 "न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत्।
अधार्मिकाणां पापानामाशु पश्यन् विपर्ययम्॥"

इति मेधातिथि-कुल्लूकपाठः। 'मनोऽधर्मे निवेशयेत्' इति चण्डेश्वरपाठः (कृ. र., २५).

'अधार्मिकाणां' विहितमकुर्वताम्, 'पापानां' निषिद्ध-कारिणाम्। आशु इति निन्दातिशयार्थम्।

महाभारते

यस्य नोत्क्रामति मतिर्धर्ममार्गानुसारिणी।
तमाहुः पुण्यकर्माणमशोच्यं मित्रबान्धवैः॥
सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम्।
तथात्मानं समादध्यान्न भ्रश्येत यथा पुनः॥

तथा

धर्माय येऽभ्यसूयन्ति बुद्धिमोहान्विता नराः।
अपथा गच्छतां तेषामनुयाताऽपि नश्यति॥
इदं च त्वामत्र परं ब्रवीमि
पुण्यप्रदं तात महाविशिष्टम्।
न जातु कामान्न भयान्न लोभा-
द्धर्मं जह्याज्जीवितस्यापि हेतोः॥

अत्रैव तैतिरीयश्रुतिः[1]

धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उप-सर्पन्ति। धर्मेण पापमपनुदन्ति, धर्मे सर्वं प्रतिष्ठितम्, तस्माद्धर्मं परमं वदन्ति॥

"'धर्मेण' धनव्ययायासादिनाऽनुष्ठितेन, 'सीदन्नपि' धनस्य व्ययितत्वात्तदभावेन दुःखमनुभवन्नपि, 'अधर्मे' परस्वहरणादौ। 'अधार्मिकाणां' विहितं अकुर्वताम्, 'पापानां' निषिद्धकारिणाम्, 'विपर्ययं' धनादिनाशम्। 'आशु' इति निन्दातिशयार्थम्, विलम्बे-नापि तद्दर्शनात्॥" वी. मि., परि., ६८.)

1 कृ. र., १८; महानारायणोपनिषद्, २२, १, (पृ. २३-२४), ed. Jacob, 1888.

## अथ प्रमाणतः

तत्र मनुः [२, ६][1]

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनां आत्मनस्तुष्टिरेव च ॥

'अखिलः' विधिनिषेधाद्यात्मकः । धर्मशब्दश्चाजहत्स्वार्थलक्षणया धर्मादिपरः । वेदस्य धर्मप्रमितिमूलत्वात् । अनुवादश्चायं तद्द्वारेण स्मृत्यादीनां[2] वेदमूलत्वप्रतिपादनार्थम् । 'शीलं' अद्रोहादि । तथा च महाभारते

अद्रोहः सर्वभूतानां कर्मणा मनसा गिरा ।
अनुग्रहश्च दानञ्च[3] शीलमेतद्विदुर्बुधाः ॥

हारीतः[4]—ब्रह्मण्यता, देवपितृभक्तता, सौम्यता, अपरोपतापिता, अनसूयता, मृदुता, अपारुष्यता, मैत्रता, प्रियवादिता, कृतज्ञता, शरण्यता, [प्रणति]श्चेति त्रयोदशविधं शीलम् । एतस्य चाचारवन्तः प्रमाणम् ।

'तद्विदां' वेदार्थविदाम् । 'आचारो' विवाहादौ कङ्कणबन्धनाद्यनुष्ठानम् । 'आत्मतुष्टिः' अधर्मसन्देहे सति वैदिकसंस्कारवासितान्तःकरणानां साधूनां एकत्र पक्षे मनःपरितोषः ।

1 वी. मि. परि., ८.

2 'स्मृतीनां धर्ममूलत्वादिति' कृत्यरत्नाकरे (पृ. २६) व्याख्यातम् ॥

3 'अनुग्रहश्च ज्ञानश्च' इति कृ. र., २६.

4 Paraphrased in वी. मि., परि., ९, where *Kalpataru* is virtually appropriated.

यदुक्तं भट्टपादैः—

एतेन वैदिकानेकधर्मधीसंस्कृतात्मनाम् ।
आत्मतुष्टेः प्रमाणत्वं [सिद्धं धर्मप्रसिद्धये[1]] ॥

याज्ञवल्क्यः [१, ७]

श्रुतिस्स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥

'प्रिय' शब्देन प्रीतिर्लक्ष्यते । 'स्वस्य' आत्मनः 'धर्ममूलं' न सर्वस्येति । 'सम्यक् संकल्पज' इति सम्यक् संकल्पाज्जातः । 'कामः' शास्त्राविरुद्धे अर्थे [यथा] मया भोजनव्यतिरेकेण उदकं न पातव्यमिति विश्वरूपः । अथवा, 'सम्यक् संकल्पात्' रागादिरहितसंकल्पात्, ज्ञानादुपजातं ब्राह्मणोपचिकीर्षादि [यदेव] मनुना शीलत्वेनोक्तं [तदेव] सम्यक् संकल्पज इत्यनेनैवोच्यते[2] ॥

तथा [१, ३]

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

1 कृ. र., २६ । तन्त्रवार्त्तिके, स्मृत्यधिकरणे, (अ. १, पा. ३.)

2 Explanation verbally reproduced in कृ. र., २८., which adds—अथवा शास्त्रेण वैकल्पिके विषये प्रतिबोधिते आत्मतुष्टिरिच्छैव नियामिकेति ॥ The citation cannot be found in the printed *Visvarūpa*, I. p. 13.

"सम्यक् सङ्कल्पाच्छास्त्राविरुद्धसङ्कल्पाज्जातः कामः मया भोजनव्यतिरेकेणोदकं न पातव्यमित्येवं रूपः ।

अथवा सम्यक् सङ्कल्पाद्रागादिरहितसङ्कल्पात् ज्ञानादुपजातं ब्राह्मणोपचिकीर्षादि एव मनुना शीलत्वेनोक्तं सम्यक् सङ्कल्पज इत्यनेनोच्यते इति कल्पतरुः ॥" (वी. मि., परि., १०.)

'विद्यानां' पुरुषार्थज्ञानानां, धर्मस्य च 'स्थानानि' व्यवस्थापकानि, बोधकत्वेन[1]।

श्रीविष्णुपुराणे [३, ६, २८–२९]

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थं च विद्यास्त्वष्टादशैव ताः ॥

[1]चतुर्दश धर्मप्रमितिं प्रति प्रधानानि। चतस्रः पुनर्दृष्टप्रधानाः क्वचिदलौकिकमर्थं प्रमाणयन्त्यो धर्मेऽपि प्रमाणम्[2]।

सुमन्तुः

वेदवेदाङ्गेतिहास-पुराण-तर्क-मीमांसा-धर्मशास्त्राणि कुल-गण-देश-जाति-वर्णधर्म-पाखण्डाश्रमश्रोत्रियधर्मव्यवस्थाप्रवर्तकानि ॥

आद्यो 'धर्मशब्दो' वर्णपर्यन्तैः प्रत्येकमभिसंबध्यते। 'कुलधर्म' चूडाकरणकालादिः। गणधर्माश्च वक्ष्यन्ते। 'देशधर्माः' स्त्रीणां वासोविन्यासविशेषादयः। 'जातिधर्माः' [सूतादीनां अश्वसारथ्यादयः। 'वर्णधर्माः'][3] उपनयनादयः। 'पाखण्डादयः' वेदबाह्याः। 'आश्रमधर्माः' भिक्षादण्डादयः। 'श्रोत्रिय'श्छन्दोध्यायी, तद्धर्माः कारी-

1 Reproduced in कृ. र., २८.

2 "इति अष्टादशविद्याः उक्ताः। तत्र चतुर्दश धर्मप्रधानाः, चतस्रः पुनर्दृष्टार्थप्रधानाः। धर्ममपि अनुषङ्गेण प्रमिमते इति न धर्मस्य च चतुर्दशेत्यनेन विरोधः ॥" (वी. मि. परि., ११).

3 Omission supplied by कृ. र., २८.

र्याद्यध्ययनभूमौ भोजनादयः। पुनः ध-ग्रहणं पाखण्ड-संबन्धव्यवच्छेदार्थम्।

पारस्करः[1]

विधिर्विधेयस्तर्कश्च वेदः षडङ्गात्मकः।

'विधिः' अज्ञातज्ञापको वेदभागः। 'विधेयो' मन्त्रः। 'तर्को' मीमांसा।

देवलः[2]

ऋग्यजुःसामाथर्वाणो वेदाः।

श-लिखितौ[2]

स्मृतिध-शास्त्राणि। तेषां प्रणेतारो मनु-विष्णु-यम-दक्षाङ्गिरोऽत्रि-बृहस्पत्युशन-आपस्तम्ब-वसिष्ठ-कात्यायन-पराशर-व्यास-शङ्खलिखित-संवर्त-गौतम-शातातप-हारीत याज्ञवल्क्य-प्राचेतसादयः[3]।

यमः[4]

मनुर्यमो वसिष्ठोऽत्रिर्दक्षो विष्णुस्तथाङ्गिराः।
उशना वाक्पतिर्व्यास आपस्तम्बोऽथ गौतमः॥
कात्यायनो नारदश्च याज्ञवल्क्यः पराशरः।
संवर्तश्चैव शङ्खश्च हारीतो लिखित[5]स्तथा॥

1 कृ. र., २८., पा. गृ. सू., २. ६, ५-६; 'षडङ्गमेके' इति मु. पार. पाठः

2 कृ. र., २८.

3 'आदि'शब्देन कल्पतरौ बुध-देवल-सोम-जमदग्नि-विश्वामित्र-प्रजापति-नारद-पैठीनसी-पितामह-बौधायन-छागलेय-जाबाल-च्यवन-मरीचि-कश्यपाः उक्ताः इति (वी. मि. परि., १६)

4 कृ. र., २९.

5 लोहितः(?) इति मूलमातृकायाम्.

एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा ।
तान्येवातिप्रणीतानि न हन्तव्यानि हेतुभिः[1] ॥

शङ्खलिखितग्रन्थौ । आदिशब्दग्राह्याश्चैते—बुध-देवल-सोम-जमदग्नि-विश्वामित्र-प्रजापति-वृद्धशातातप-[सुमन्तु]-पैठीनसी-पितामह-बौधायन-छागलेय-जाबाल-च्यवन-मरीचि-काश्यपाः[2] ।

तथा च भविष्यपुराणे

अष्टादशपुराणेषु यानि वाक्यानि पुत्रक ।
तान्यालोच्य महाबाहो तथा स्मृत्यन्तरेषु च ॥
मन्वादिस्मृतयो यास्तु षट्त्रिंशत्परिकीर्तिताः ।
तासां वाक्यानि क्रमशः समालोच्य ब्रवीमि ते ॥

इति गुहं प्रति ईश्वरवाक्ये ।

'मन्वादिस्मृतयः,' ताश्चानन्तरोक्ताभिरेव सर्वपरिगृहीताभिः पूर्यन्ते ।

वृद्धशातातप-योगियाज्ञवल्क्य-वृद्धवसिष्ठ-वृद्धमनु-लघुहारीतादीनि तु प्रसिद्धषट्त्रिंशदन्तर्गतकर्तृकान्येव अवस्थाभेदेन तैरेव का[क]रणात्[3] ।

1 'हातव्यानि' इति कृ. र. मातृकायाम्.

2 वृद्धशातातप is omitted in कृ. र., २९ ; and वृद्धशातातप and सुमन्तु are omitted in the कल्पतरु citation in वी. मि. परि., १६, while नारद occurs in it after प्रजापति.

3 "ताश्चानन्तरोक्ताभिरेव सर्वपरिगृहीताभिः पूर्यन्ते" इति कल्पतरुः । तन्न । तथा स्मृत्यन्तरेषु चेत्यनेन भविष्यपुराण एव षट्त्रिंशत्स्मृतेः व्यतिरिक्तस्मृतेः दर्शितत्वात् गोभिल-ऋष्यश्रृङ्गादीनां अपरस्मृतिकाराणां तत्र तत्र स्वयमेवादरात् । राजतुल्ययोगक्षेमेण कामधेनुकृता अन्यैरपि व्याघ्रादिमुनीनामादरात् । तस्मात् महाजनपरिगृहीतत्वमेव तन्त्रं, न तु षट्त्रिंशदन्यतमत्वमिति ध्येयम् । वृद्धशातातप-वृद्धमनु-योगियाज्ञवल्क्य-वृद्धवसिष्ठ-लघुहारीतादीनि तु प्रसिद्धान्तर्गतान्येव अवस्थाभेदेन तैरेव करणात् ।"

(कृत्यरत्नाकरः, पृ., २९-३०.)

तथा च याज्ञवल्क्येनोक्तम् "योगशास्त्रं च यत्प्रोक्तमिति"।

तथा

"स्नानमद्वैवतैर्मन्त्रैर्यत्त्वयोक्तं पुराऽनघ" इति।

यानि तु गृह्यतत्परिशिष्टादीनि तानि भिन्नकोटीन्येव पुराणवत् [प्रमाणानि][1]। तथा स्मृत्यन्तरेषु चेति भेदेनाऽभिधानात्। यानि तु विष्णुधर्म-शिवधर्म-महाभारतरामायणादीनि तान्यपि 'तथा स्मृत्यन्तरेषु च'इत्यनेनैवोपात्तानि[2]। तथा चोक्तम्।

भविष्यपुराणे

अष्टादशपुराणानि रामस्य चरितं तथा।
विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत॥
कार्ष्णं च पञ्चमो वेदो यन्महाभारतं स्मृतम्।
सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते॥
जयेति नाम चैतेषां प्रवदन्ति मनीषिणः।

[3]यदत्र श्लोके स्मृतिः इति कृत्वा प्रमाणिकानां वचनम्। तदपि महाजनपरिगृहीतत्वेन प्रमाणत्वात्। तथा स्मृत्यन्त-

1 वी. मि. परि., १६.

2 "यानि गृह्यपरिशिष्टानि तान्यपि स्मृत्यन्तरेषु च इत्यनेनैव परिगृहीतानि महाजनादरात। यानि तु विष्णुधर्म-शिवधर्म-महाभारत-रामायाणादीनि तान्यपि तथैव परिग्रहसाम्यात्। एवं पुराणान्यपि॥" (कृ. र., ३०).

3 कृ. र., ३०-३१. has लिखनं for वचनं and तदविज्ञायमानवक्तृकमपि before महाजनपरिग्रहात.

रेषु च' इत्यनेनैव संगृहीतं वेदितव्यम्। यत्तु षट्त्रिंशन्मतादि तत् कैश्चिदेव परिगृहीतात्वेनाच्च प्रमाणम्[1] ॥

शङ्खलिखितौ

आम्नायप्रामाण्यादाचारः सर्वेषामुपदिश्यते ।

आचार्यैः [इत्यर्थः]

विष्णुपुराणे [३, ११, ३]

साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तु सदाचारः स उच्यते ॥

वसिष्ठः [१, ४-५]

श्रुतिस्मृतिविहितो धर्मः । तदलाभे शिष्टाचारः प्रमाणम् ।

बौधायनो यमश्च—[बौ. ध., १, १, ५-६]

शिष्टाः खलु विगतमत्सराः निर[2][हङ्काराः, कुम्भीधान्या अलोलुपा दम्भ-दर्प-लोभ-मोह-क्रोध-वर्जिताः ।

धर्मेणाधिगतो येषां वेदः सपरिबृंहणः ।
शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षहेतवः ॥

'मत्सरः' परोत्कर्षाऽसहिष्णुत्वम् । 'निरहङ्काराः' निरभिमानाः । 'कुम्भीधान्याः' अल्पसंतुष्टा इति विवक्षिताः] 'अलोलुपाः' विषयालम्पटाः, 'दम्भः' ख्याल्यै

1 कृ. र., ३१ adds—"इतिहासोऽपि पुराणमेव—'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वचनात् । पाञ्चरात्रपाशुपतादीन्यपि शास्त्राणि वेदाविरुद्धभागे प्रमाणमेव इति पारिजातः ॥"

2 [ ] = Lacunæ in MS. filled up from कृ. र., ३३.

धर्मानुष्ठानम्। धर्मेणाध्ययनमितिकर्तव्यतया। 'सपरिबृंहणः' साङ्गेतिहासपुराणः। 'तदनुमानज्ञाः' वेदे तूहापोहकुशलाः। 'श्रुति'र्वेदः 'प्रत्यक्षः' श्रवणेन्द्रियग्राह्यो 'हेतु'रुपायो धर्मज्ञाने येषां ते तथा [उक्ताः][1]।

<u>वसिष्ठः</u> [६, ४३]

पारंपर्यागतो येषां वेदः सपरिबृंहणः।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः॥

<u>हारीतः</u>

शिष्टाः श्रुतिस्मृतिविहितावस्थिताः प्रतिपत्तव्याः। 'अवस्थिताः' ज्ञानानुष्ठाननिष्ठाः।

<u>आपस्तम्बः</u> [२, २९, १६]

स्त्रीभ्यः सर्ववर्णेभ्यश्च धर्मशेषान् प्रतीयादित्येके।

'एके' ये पूर्वं आपस्तम्बेन स्त्रीषु शूद्रेषु चाथर्वणस्य वेदस्य शेष इत्युपदिश्यन्तीत्युक्ताः। शिष्टाचारप्रामाण्येऽतिप्रसङ्गनिवारणायाह <u>आपस्तम्बः</u> [२, १३, ७-८]।

दृष्टो धर्मव्यतिक्रमः साहसं चैव पूर्वेषाम्।
तेषां तेजोविशेषेण प्रत्यवायो न विद्यते।
तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरोऽबलः॥

'व्यतिक्रमः' बुद्धिपूर्वं रागादाचरणं, यथेन्द्रस्याऽहल्यागमनम्। 'साहसं' क्रोधादिना अविमृश्यकरणम्, यथा वसिष्ठस्य जलप्रवेशः। 'अबलः[2]' अतेजस्कः अब्रह्मज्ञ इति

1 कृ. र., ३३.
2 कृ. र., ३४—"'अबलो' निषिद्धक्रियाजन्यानिष्टोदयविरोधिधर्मशून्यः"।

यावत्। 'अवरजः' इदानींतनः। तेजो ब्रह्मज्ञानम्। तद्विशेषेण साक्षात्करणात्। यथा पुष्करपालाश आपो न श्लिष्यन्ति। 'एवमेवं विदितपापं कर्म न श्लिष्यत' इति ब्रह्मज्ञानिन एव पापानाश्लेष[बोधक] श्रुतेः[1]।

<u>शङ्खलिखितौ</u>[2]

आपत्स्वपि हि काष्ठासु परस्वं नैव कामयेत्।
नाऽभक्ष्यं भक्षयेत् किञ्चित् न पूर्वचरितं चरेत्॥
तेजोमयानि पूर्वेषां नवीनानीन्द्रियाणि च।
पापैस्ते नोपलिप्यन्ते पद्मपत्रमिवाम्भसा॥
सुरां पिबन्ति त्रिदशाः या चाऽपेया द्विजातिभिः।
हरन्ति वित्तं यत्सिद्धाः तद्वासिद्धे न विद्यते॥

'पूर्वचरितं' निषिद्धमात्राभिप्रेतम्। 'तेजोमयानि' ज्ञानप्रधानानि[3]।

<u>महाभारते</u>

कृतानि यानि कर्माणि[4] दैवतैर्मुनिभिस्तथा।
नाऽऽचरेत्तानि धर्मात्मा श्रुत्वा चाऽपि न कुत्सयेत्[5]।

<u>बौधायनः</u> [१, २, १–९]

पञ्चधा विप्रतिपत्ति र्दक्षिणतस्तथोत्तरतः। यानि दक्षिणतस्तानि व्याख्यास्यामः। यथैतदनुपनीतेन सह भोज-

1 Caṇḍeśvara (कृ. र., ३४) adds—"न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य देहिनः" इति स्मृतेश्च।

2 कृ. र., ३४.

3 "पूर्वचरितं निषिद्धं सुरां पिबन्तीत्यादि द्विजातीनां देवतात्वमुररीकृत्य" (कृ. र., ३४)।

4 'कर्माणि' निषिद्धानि (कृ. र., ३५.)

5 'न विश्वसेत्' इति कृ. र., (३५) पाठः।

नम्, स्त्रिया सह भोजनम्, पर्युषितभोजनम्, मातुलपितृ-स्वसृदुहितृपरिणयनमिति । अथोत्तरतः ऊर्णाविक्रयः, सीधु-पानमुभयतोदद्भिर्व्यवहारः, आयुधीयता, समुद्रयानमिति । इतरदितरस्मिन् कुर्वन् [दुष्यतीतरदितरस्मिन्] ।

तत्र तत्र देशप्रामाण्यमेव स्यात्। मिथ्यैतदिति गौतमः। उभयं त्वैतन्नाद्रियेत । शिष्ट-स्मृति-विरोधदर्शनात् ॥

'विप्रतिपत्तिः' धर्मशास्त्रविरुद्धप्रतिपत्तिः । तत्र 'देशप्रामाण्यमेव स्यात्' इति पूर्वपक्षः । शेषं सुगमम् ।

## अत्र पुराणलक्षणमुच्यते

मत्स्यपुराणे [५३, ६५]

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च[1] ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥
'प्रतिसर्गः' संहारः[2] ।

विष्णुपुराणे [३, ६, २०–२४]

अष्टादशपुराणानि पुराणज्ञाः प्रचक्षते ॥
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथान्यं नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं चैव भविष्यं नवमं स्मृतम् ।
दशमं ब्रह्मवैवर्तं लिङ्गमेकादशं स्मृतम् ॥

1 विष्णुपुराणे (३, ६, २५)—
सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च ।
सर्वेष्वेतेषु कथ्यन्ते वंशानुचरितं च यत् ॥

2 'प्रतिसर्गः' प्रलयः इति कृ. र., पृ. ३१.

वाराहं द्वादशं चैव स्कान्दं चाऽत्र त्रयोदशम् ।
चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् ॥
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ॥

[महापुराणान्येतानि ह्यष्टादश महामुने]

मत्स्यपुराणे [५३, ६०–६४]

पाद्मे पुराणे यत्प्रोक्तं नरसिंहोपवर्णनम् ।
तदष्टादशसाहस्रं नारसिंहमिहोच्यते ॥
नन्दाया यत्र माहात्म्यं कार्तिकेयेन वर्ण्यते ।
नन्दीपुराणं तल्लोकैः नन्दाख्यमिति कीर्त्यते ॥
यत्तु साम्बं पुरस्कृत्य भविष्यति कथानकम् ।
प्रोच्यते तत्पुनर्लोके साम्बमेतन्मुनिव्रताः ॥
[एवमादित्यसंज्ञा च तत्रैव परिगद्यते ।
अष्टादशभ्यस्तु पृथक् पुराणं यत्तु दृश्यते] ॥
विजानीध्वं द्विजश्रेष्ठाः तदेतेभ्यो विनिर्गतम् ।
'विनिर्गतं' उद्धृतम् । यथा कालिकापुराणादि[1] ॥

देवलः[2]

शिक्षा-व्याकरणं-निरुक्त-च्छन्दः-कल्प-ज्योतिषाणि वेदाङ्गानि । तथा आर्षाः पूर्ववृत्तान्ताश्रयाः प्रतिपादितफला इतिहासाः ॥

'आर्षाः' ऋषिप्रणीताः ।

भविष्ये

दृष्टार्था तु स्मृतिः काचिददृष्टार्था तथाऽपरा ।

1 कृ. र., ३२; वी. मि., परि., १५.
2 कृ. र., ३५; वी. मि., परि., २०.

दृष्टाऽदृष्टार्थरूपान्या न्यायमूला तथा परा ॥
अनुवादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी ।
सर्वा एता वेदमूला दृष्टार्था परिहृत्य तु ॥

तथा

षाड्गुण्यस्य प्रयोगस्य [1]प्रयोगः कार्यगोचरात् ।
सामदानादुपायानां योगो व्याससमासतः ॥
अध्यक्षाणां[च] निक्षेपः कण्टकानां निरूपणम् ।
दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभि र्गरुडाग्रज ॥
सन्ध्योपास्तिः सदा कार्या शुनो[2] मांसं न भक्षयेत् ।
अदृष्टार्था स्मृतिः प्रोक्ता ऋषिभि र्ज्ञानकोविदैः ॥
पालाशं धारयेद्दण्डमुभयार्थं विदुर्बुधाः ।
विबोधे तु विकल्पः स्यात् जपहोमश्रुतौ यथा ॥
श्रुतौ दृष्टं तथा कार्यं स्मृतौ न तादृशं यदि ।
अनुक्तवादिनी सा तु परिव्राज्यं तथा गृहात् ॥

'षाड्गुणः' सन्धिविग्रहादयो वक्ष्यन्ते। प्रयोगः कार्यगौरवात् षाड्गुण्यस्यैव व्याससमासाभ्यां कर्तव्य इत्यर्थः। सामादीनामपि कार्यगौरवात् व्याससमासाभ्यां प्रयोगः कर्तव्य इत्यर्थः। जपहोमश्रुताविति, सूर्योदयावधि रात्रिजपोऽनुदितहोमविषयो यथा।

'अनुक्तवादिनी' अनुदितवादिनी। यथा पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ [यथाप्राप्त]

1 'प्रयोगे तु' इति कृ. र., (पृ. ३६) पाठः
2 'गुणो मांसं,' 'आममांसं' इति कृ. र. पाठभेदौ (पृ. ३६.)।

भिक्षचर्यं चरन्ति इत्यनयाऽनूदितं 'ब्राह्मणः प्रव्रजेद्गृहादि'ति मनुर्वदति[६, ३८], विधत्ते इत्यर्थः[1] ॥

मनुः [१२, १०५–६]

प्रत्यक्षमनुमानं च शब्दश्च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥
आर्षं धर्मोपदेशश्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नाऽपरः[2] ॥

'शब्दं' शब्दज्ञानादसन्निकृष्टेऽर्थे विज्ञानम् । 'विविधागमं' विविधः श्रुतिस्मृतीतिहासपुराणरूप आगमो यस्य ज्ञानस्य करणं तद्विविधागमम् । 'आर्षं' वैदिकम् । 'तर्केण' मीमांसादिना[3] । एतच्च प्रमाणमात्रोपलक्षणार्थम् । तथा चार्थापत्त्युपमानाभावानामपि धर्मप्रयोग इत्युपमायोगः कथितो भवति ।

व्यासः

द्रव्यशुद्धिमभीप्सद्भिः न वेदादन्यदिष्यते ।

1 कृ. र., परि., ३७. The discussion on श्रुतिस्मृतिविरोध which follows in कृ. र., ३७, is missing in the कल्पतरु, 'यथा यदि वा इतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा इत्यनयानूदितं 'ब्राह्मणः प्रव्रजेद्गृहात्' इति मनुस्मृति 'र्वदति' विधत्ते इत्यर्थः (वी. मि., १९).

2 Cf. Kumārila's *vārtikā*—

धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥

3 'तर्केण' न्यायविमर्शनेन इति केचित् । अन्ये प्रसङ्गरूपेणेति । पूजितविचारया मीमांसयेत्यपरे । भेदेऽभेदे वा सहकारित्वानुवादात् सर्वमिदमविरोधि । कल्पतरुकारस्तु—प्रमाणमात्रोपकारकतयैव तर्कमवतारयति स्म । सर्वस्यैव प्रमाणस्य यथायथं तर्कसहकारिकत्वात् प्रमाणविभागविवादस्त्वन्य एव ।" (कृ. र., पृ. ३८).

धर्मस्य कारणं शुद्धं मिश्रमन्यत्प्रकीर्तितम् ॥
अतः स परमो धर्मो यो वेदादवगम्यते ।
अवरः स तु विज्ञेयः यः पुराणादिषु स्थितः ॥
एतेभ्योऽपि यदन्यत्स्यात्किञ्चिद्धर्माभिधायकम् ।
तदद्भुतवचो विद्धि मोहस्तस्याश्रयो मतः[1] ॥
वेदार्थवित्तमैः कार्यं यत्स्मृतमृषिभिः पुरा ।
तद्यत्नेनाऽनुतिष्ठेत्तु तन्निषिद्धं तु वर्जयेत् ॥
ते हि वेदार्थतत्वज्ञाः लोकानां हितकाम्यया ।
प्रदिष्टवन्तो यद्धर्मं तं धर्मं न विचालयेत्[2] ॥
वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेदपि ।
ऋषिभिर्निश्चिते तत्र का शङ्का स्यान्मनीषिणाम् ॥

शङ्खलिखितौ

रागद्वेषाग्निदग्धानामज्ञानविषपायिनाम् ।
चिकित्सा धर्मशास्त्राणि व्याधीनामिव भेषजम् ॥
रागद्वेषांशेन तन्मूलं भ्रान्तिज्ञानं लक्ष्यते[3] ॥

यमः

यथाहि मृन्मयं भाण्डं दुष्टं वर्षशतैरपि ।
पुनर्दाहेन शुद्ध्येत धर्मशास्त्रैस्तथा द्विजः ॥

हारीतः

अज्ञानतिमिरान्धानां [भ्रामितानां] कुदृष्टिभिः ।
धर्मशास्त्रप्रदीपोऽयं धार्यो मार्गानुदेशतः ॥

1 Line corrupt in Ms; restored from कृ. र., २, ३९.

2 'न विचारयेत्' इति कृ. र., ३९.

3 "रागद्वेषादिदग्धानां सतां अज्ञानविषपायिनां भ्रमरूपज्ञानभाजां चिकित्सा धर्मशास्त्राणि वैषयिकज्ञानाधानद्वारा मोहनिवर्तकत्वात्" (कृ. र., ३९.)

'कुदृष्टिभिः' कुदर्शनैः बौद्धादिभिः[1] ॥

यमः

वेदाः प्रमाणं स्मृतयः प्रमाणं
धर्मार्थयुक्तं वचनं प्रमाणम् ।
[2]यस्य प्रमाणं न भवेत् प्रमाणं
कस्तस्य कुर्याद्वचनं प्रमाणम् ॥
न यस्य वेदा न च धर्मशास्त्रं
न वृद्धवाक्यं हि भवेत्प्रमाणम् ।
सोऽधर्मकृद्दृष्टिहतो दुरात्मा
नात्माऽपि तस्येह भवेत्प्रमाणम् ॥

[वेदाः प्रमाणमिति] समुदायस्य प्रमाकरत्वविवक्षया एकवचनम् । 'धर्मार्थयुक्तं वचन'मिति च सद्वचनाभिप्रायम् । 'यस्य प्रमाणं न भवेत्प्रमाण'मिति अनन्तरोक्तं वेदादिप्रमाणं यो न मन्यत इत्यर्थः ॥

अत्र वसिष्ठः [१, १६]

त्रैविद्यवृद्धा यं ब्रूयुः धर्मं धर्मविदो जनाः ।
पतने पावने चैव स धर्मो नात्र संशयः[3] ॥

त्रिविधा विद्या त्रिविद्या तां वेदेत्यर्थेऽण्प्रत्ययः । तिस्रो विद्या वेदेति तु क्रियमाणे 'द्विगोर्लुक्' (४-१-८८) इति लुक्प्रसंग इति महाभाष्यटीकाकारः । अथवा त्रैविद्ये तिसृष्वपि विद्यासु ये वृद्धाः ज्ञानवन्तः । त्रैविद्यमिति

1 "कुदृष्टिभिः, मन्दरागैः वेदद्वेषिभिः" (कृ. र., ४०).

2 'यस्य प्रमाणं न स चेत्' इति उदयपुरमातृका.

3 'त्रैविद्यवृद्धाः' शिष्टाः, 'पतन' अधर्मे, 'पावन' धर्मे, यं ब्रूयुः स धर्मः (कृ. र., ४०).

स्वार्थेऽप्यण्। 'पतने' पतननिमित्ते पापे, 'पावने' स्नानादौ' यं धर्मं ब्रूयुः स धर्मः।

मनुः [१२, १०८, ११०]

[1]अनाज्ञातेषु धर्मेषु कथं स्यादिति चेद्भवेत्।
यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः॥
दशावरा वा परिषद्यं धर्मं परिकल्पयेत्।
त्र्यवरा वापि वृत्तस्था तं धर्मं न विचालयेत्॥

'दशावरा' दशावरे अल्पे यस्यां सा तथा। एतेनैकादशादीननुजानाति। 'अनाज्ञाते' दशावरैः शिष्टैरूहावद्भिरलुब्धैः प्रशस्तं कार्यम्। 'अनाज्ञाते' अनवगते संदिग्धे वा।

शङ्खलिखितौ

श्रुतिविरोधे त्रैविद्यसमवायेषु निर्णयः दशावरेषु॥
श्रुतिग्रहणं स्मृत्याचारधर्मप्रमाणमात्रोपलक्षणार्थम्[2]।

## अथ पर्षल्लक्षणम्

तत्र मनुपराशरौ[3] [मनु, १२, ११]

त्रैविद्यो हेतुक स्तर्कः नैरुक्तो धर्मपाठकः।

1 'अनाम्नातेषु' इति मेधातिथि-कुल्लूकादृतपाठः

2 "श्रुतिविरोधे तद्विधसमवायेषु तन्निश्चयोदशावरेषु श्रुति ग्रहणं स्मृत्याचारधर्मप्रमाणमात्रोपलक्षणार्थम्।" इति मूलमातृकायाम्। विश्वरूपभाष्ये (याज्ञ. १, ९, शङ्खवचनमिति)।

3 पराशर, ८, २७, यथा—

चातुर्विद्यो विकल्पी च अङ्गविद्धर्मपाठकः।
त्रयश्चाश्रमिणो मुख्याः पर्षदेषा दशावरा॥

ततः चातुर्विद्यादिशब्दार्थानङ्गिराः विवृणोति—

चतुर्णामेव वेदानां पारगा ये द्विजोत्तमाः।

त्रयश्चाश्रमिणः पूर्वे पर्षत्स्यात्तु दशावरा ॥

'हेतुको'ऽत्र वेदाविरुद्धानुमानव्यवहारी। 'तर्को' वक्ष्यमाणो विकल्पः।

वसिष्ठबौधायनौ[1]

चातुर्विद्यो विकल्पी च अङ्गविद्धर्मपाठकः।
आश्रमस्था स्त्रयो मुख्याः पर्षदेषा दशावरा[2] ॥

'दशावरा' मुख्याः।

यमः

छन्दोगो बह्वृचो ऽध्वर्युरथर्वा धर्मपाठकः।
तथैवाश्रमिणः पूर्वे पर्षदेषा दशावरा ॥
वेदपूता व्रते म्लाना ब्राह्मणाः पङ्क्तिपावनाः।
यद्ब्रूयुस्ते महात्मानस्तत्प्रमाणं न संशयः ॥

स्वैस्तैरङ्गै र्विना ऽप्येते चातुर्विद्या इति स्मृताः ॥
धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च।
त्रयाणां यः प्रमाणज्ञः स विकल्पी भवेद्द्विजः ॥
शब्दे च्छन्दसि कल्पे च शिक्षायां च सुनिश्चितः।
ज्योतिषामयने चैव स निरुक्तोऽङ्गविद्भवेत् ॥
वेदविद्याव्रतस्स्नातः कुलशीलसमन्वितः।
ब्रह्मचर्याश्रमादूर्ध्वं विप्रोऽयं वृद्ध उच्यते ॥

*Parāśara-Mādhavīya*, ed. Islampurkar. II, i, २३०.

1 वसिष्ठ, ३, २०; बोधायन, १, १, ८.

2 'आश्रमस्थास्त्रयो विप्राः' इति मुद्रितबौधायनपाठः। 'विकल्पी' मीमांसकः। 'अङ्गवित्' व्याकरणदिज्ञः। 'आश्रमस्थाः त्रयो विप्राः' अवानप्रस्थास्त्रयो गृह्यन्ते। वानप्रस्थानां पुनर्वनाधिवासित्वात् अनधिकारो धर्मोपदेशस्य। परिव्राजकोऽपि भिक्षार्थी ग्राममियादेव। तथा च गौतमः—'प्रागुपोत्तमात्त्रय आश्रमिणः' (२८, ५०) इति। 'विप्रा' इति। क्षत्रियवैश्ययोः धर्मोपदेशानधिकारप्रदर्शनार्थं विप्रग्रहणम्। ब्राह्मणो धर्मान प्रब्रूयादिति वसिष्ठवचनात् (१, ५०) 'आश्रमस्थास्त्रयो मुख्याः' इति पाठे नैष्ठिकब्रह्मचारी गृह्यते। एवंगुणास्त्रय आश्रमिणो दशावरा परिषद्भवति। (गोविन्दस्वामिविवरणे)

शङ्खलिखितौ

ऋग्यजुःसाममथर्ववेदषडङ्गविदुञ्छवृत्तिर्नैष्ठिको ब्रह्मचारी पञ्चाग्निरिति दशावरा पर्षत्। तत्समवाये धर्मव्यवहरणम् ।

नैष्ठिकग्रहणमुपकुर्वाणव्यवच्छेदार्थम् ।

पैठीनसिः

अलोलुपा ह्यदाम्भिकाः धर्मशास्त्रप्रणेतारः, अमत्सरिणः, दशैव तद्धर्मं व्यवस्यन्तीति वेदपारगाः ।

'प्रणेतारः' प्रवर्तयितारः। अत्र इतिकरणो हेतौ। इत्यतः वेदपारगाः धर्मं व्यवस्यन्ति। दशेति पुरुषाभिप्रायम्। न गुणभेदेन गुणवत्परम्। गुणानामल्पभूयसां तत्र तत्राभिधानात्।

शङ्खलिखितौ

श्रेयांश्चत्वारो वेदविदो धर्मशास्त्रविदिति। पञ्चावरामेके। दशावरेषु धर्मानुव्यवहरणं यथाऽवलेपं शास्त्रतस्तेऽनुब्रूयुः स धर्मः।

'यथावलेपं' यथादोषम् ।

पैठीनसिः

चत्वारो वा त्रयो वाऽपि यं ब्रूयुर्धर्मपाठकाः ।
वेदपारग एकश्च तत्प्रमाणमशंसयम् ॥

याज्ञवल्क्यः [१, ९]

चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव च ।
सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥

साक्षात्कृतब्रह्मतत्वः ।

वसिष्ठः [३, ७]

चत्वारो वा त्रयो वाऽपि यं ब्रूयुर्धर्मपारगाः ।
स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥

अङ्गिराः

चत्वारो वा त्रयो वाऽपि वेदवन्तोऽग्निहोत्रिणः ।
ब्राह्मणा समवायस्थाः पर्षदित्यभिधीयते ॥
अनाहिताग्नयो ये तु केवलं वेदपारगाः ।
पञ्चैते वेदशास्त्रज्ञाः पर्षत्संज्ञा ह्युदाहृताः ॥
ये तु धर्मविदो विप्राः कार्याकार्यविचक्षणाः ।
प्रायश्चित्तप्रणेतारः सप्तैते परिकीर्तिताः ॥
एकविंशतिसंख्यातैर्मीमांसावेदपारगैः[1] ।
वेदाङ्गकुशलश्चैव पर्षत्त्वं तु प्रकल्पयेत् ॥
यतीनां सत्यतपसां ज्ञानविज्ञानवेदिनाम्[2] ।
शिरोव्रतेन स्नातानामेकोऽपि परिषद्भवेत् ॥
ये तु पूर्वं मया प्रोक्ताः स्थिता यायावरे पथि ।
त्रयोऽपि परिषज्ज्ञेयाः सर्वपापापहारिणः ॥
एषा तु लघुकार्येषु मध्यमेषु च मध्यमा ।
महापातकसाध्येषु शतशो भूय एव च ॥
अत ऊर्ध्वं तु ये विप्रा केवलं नामबोधकाः ।
परिषत्त्वं न तेष्वस्ति सहस्रगुणितेष्वपि ॥

'समवायस्थाः' मिलिताः । 'वेदशास्त्रज्ञा' वेदस्य उपकरणं शास्त्रं मीमांसा तस्यां विहितनिषिद्धतत्त्वज्ञाः ।

1 "श्रुतिसन्न्यायपारगैः" इति अपरार्कपाठः (पृ. २३).
2 'ज्ञानविज्ञानचेतसां' इति अपरार्कपाठः ।

गुणापकर्षादेकविंशतिसङ्ख्यत्वम्। 'ज्ञानं' तत्वार्थबोधः। 'विज्ञानं' लौकिकवैदिकविद्याधारणम्। 'शिरोव्रतं' वेदाध्ययनसमाप्तौ सर्वविद्याव्रतम्। 'पारेषद्भवेत्' परिषद्भवेत्। यद्यपि 'हिंसानुग्रहयोरनारम्भी' इति तैरनुग्रहो निषिद्धः। तथापि—'आर्तानां मार्गमाणाना'मित्यादिवचनादुपस्थितस्य प्रायश्चित्तादाने दोषश्रुतेः[1] शास्त्राननुमतानुग्रहनिषेधपरताप्यस्येति गम्यते पूर्वं 'वेदवन्तोऽग्निहोत्रिण' इत्यत्र श्लोके। 'यायावराः' शिलोञ्छादिवृत्तयो व्रतशीलाग्निहोत्रिणः। 'लघुषु' स्वल्पपापेषु। 'महापातकसाध्येषु' महापातक शोधने अन्यत्।

हारीतः

चातुर्विद्यावित् विकल्पाङ्गविद्धर्मवित्त्रयाश्रमिण इति परिषदं दशावरामाहुः। चत्वारः तासां पूर्वा श्रेयस्यो भवन्ति।

गौतमः—[२८, ५०–५२]

चत्वारश्चतुर्णां पारगाः [वेदानां] प्रागुत्तमाः त्रयः आश्रमिणः पृथग्धर्मविदस्त्रय एतान् दशावरान् [परिषदित्याचक्षते]। असंभवे त्वेतेषां श्रोत्रियो वेदविच्छिष्टो विप्रतिपत्तौ [यदाह।]। यतोऽयमप्रभवो भूतानाम्[2]।

1 आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः।
जानन्तो न प्रयच्छन्ति ते यान्ति समतां तु तैः॥
इति अङ्गिरःस्मरणात्। (मिताक्षरा ३, ३००)

2 "यतो यमप्रभवौ भूतानाम्" इति मस्करिपाठः। "यस्माद्वेदात् 'यमप्रभवौ', 'यम'शब्देन संसारनिवृत्तिरुच्यते, 'प्रभव' शब्देन तस्यैव प्रवृत्तिः, उभयसाधनस्य च वेदादधिगमः। तेन वेदः प्रमाणं विप्रतिपत्तौ। आदौ च यमग्रहणं संसारनिवृत्तिः परमपुरुषार्थ इति ज्ञापनार्थम्।" (इति मस्करिः).

"यतोऽयं 'अप्रभवो' भूतानाम् हिंसानुग्रहयोगेषु" इति—प्रभवति अस्मादिति 'प्रभवः', कारणं, तन्न विद्यते तस्य सो 'अप्रभवः'। यस्मादयं भूतानां हिंसानुग्रहयोगेषु

'उत्तमाः' प्रव्रजिताः। 'विप्रतिपत्तौ' इत्यत्र यदा तत् कार्यमिति शेषः। 'अयं' इति योग्यत्वात् वेदः परामृश्यते। 'अप्रभवः' अपौरुषेयः।

मनु-वसिष्ठ-यम-[पराशर]-बौधायनाः, पैठीनसिश्च प्रथमे

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्[1]।
सहस्रशः समेतानां परिषत्त्वं न विद्यते॥
यं वदन्ति तमोभूता मूर्खा धर्ममतद्विदः।
तत्पापं शतधा भूत्वा तान्वक्तॄननुगच्छति॥

अङ्गिराः

चतुर्णामपि वर्णानां पारगा ये द्विजोत्तमाः।
[2]यथा वेदे विनाप्यङ्गैश्चातुर्विद्यमिति स्मृतम्॥
धर्मस्य पर्षदस्यैव प्रायश्चित्तक्रमस्य च।
त्रयाणां च प्रमाणज्ञः स विकल्पी भवेद्द्विजः॥
[[3]शब्दे छन्दसि कल्पे च शिक्षायां च सुनिष्ठितः।]
ज्योतिषामयने चैव सनिरुक्तेऽङ्गविद्भवेत्॥
वेदविद्याव्रतस्नातः सत्यसंधो जितेन्द्रियः।

दण्डप्रायश्चित्तादिषु अगृह्यमाणकारणः केवलशास्त्रनेत्रः तस्मादेकस्यापि वचनमनुष्ठेयं इति। अपर आह—प्रभवनं 'प्रभवः' प्रभुत्वं तद्यस्य सोऽस्ति नास्ति सो 'अप्रभवः'। न ह्यसौ शास्त्रनिरपेक्षः स्वतन्त्रः किंचिदनुगृह्णाति निगृह्णाति वा। तस्मादस्य वचनं अनुष्ठेयम्।" इति हरदत्त—मिताक्षरा।

1 मनु, १२, ११४–११५; वसिष्ठ, ३, ५–६; पराशर, ८, ५–६; बौधायन, १, १०, १२। 'तमोमूढाः' इति वसिष्ठ-बौधायनौ।

2 Aparārka (p. 22) reads यथाक्रमं for यथावेदं, 'विनोपाङ्गैः' for विनाप्यङ्गैः, 'वितर्की' for विकल्पी, 'ज्योतिश्शास्त्रे च कुशलः' for ज्योतिषामयने चैव, and ते मया परिकीर्तिताः for ये मया परिकीर्तिताः in the text.

3 एषा पंक्तिः मूलमातृकायां त्रुटिता।

अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः ॥
ब्रह्मचर्याश्रमादूर्ध्वं वृद्धा आश्रमिणस्त्रयः ।
षडे[illegible]स्तस्य ते धर्मे ये मया परिकीर्तिताः ॥

तथा [अङ्गिर., ३, १६]

[1]पर्षद् या ब्राह्मणानां तु सा राज्ञां द्विगुणा स्मृता ।
वैश्यानां त्रिगुणा चैव पर्षद्वच्च व्रतं स्मृतम् ॥

'ज्योतिषामयने' ज्योतिःशास्त्रे । 'सनिरुक्ते' निरुक्तसहिते । इदं द्वैगुण्यादि क्षत्रियादीनां शोध्यानाम् । यच्च व्रते द्वैगुण्यं, तत् प्रतिलोमोत्कृष्टवर्णवधतत्स्त्रीगमनादिविषये चोक्तम्[2] ।

भविष्यपुराणे

पर्षद्विधानमत्रैव प्रोक्तमाङ्गिरसेन तु ।
द्विगुणा क्षत्रियाणां तु वैश्यानां त्रिगुणा स्मृता ॥
चतुर्गुणा तु शूद्राणां पर्षदुक्ता महात्मनाम् ।
पर्षद्वच्च व्रतं प्रोक्तं शुद्धये पापकर्मणाम् ॥
अनेन जायते वीर वर्णानामुत्तमाहते ।
अधमानां तु वर्णानामुत्कृष्टहनने गुह ।
दोषो गुरुतरो ज्ञेयः क्षत्रादीनां न संशयः ॥

अथ मनुः [२, १४–१५]

श्रुतिद्वैधं तु यत्र स्यात् तत्र धर्मावुभौ स्मृतौ ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥

1 'पर्षद्या ब्राह्मणानां स्यात् सा राज्ञां द्विगुणा मता' इति नन्दपण्डितकृतविद्वन्मनोहरापाठः (पृ. २३९).

2 "यथा क्षत्रियवैश्ययोः परिषद्वृद्धिः तथा व्रतमपि वर्धते । इयं च व्रतवृद्धिः उत्तमजातिहनने द्रष्टव्या । इतरविषये व्रतह्रासस्य दर्शनात् ।

उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः[1] ॥

'समयाध्युषिते' उषःकाले ।

गौतमः [१, ६]

तुल्यबलविरोधे विकल्पः[2] ।

जाबालः

श्रुतिस्मार्तविरोधे तु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सदा ॥

शङ्खः

तुल्यश्रुतिविरोधे विकल्पाः श्रुतयः । श्रुतिरिह गरीयसी । स आम्नायः ॥

आम्नायत्वेन निरपेक्षत्वमुक्तम् ।

बृहस्पतिः—[संस्का. १३]

वेदार्थोपनिबन्धत्वात्प्रामाण्यं तु मनोः स्मृतम् ।
मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते ॥

वेदार्थः उपनिबन्धो यस्य स वेदार्थोपनिबन्धः । उपनिबन्ध्यतेऽनेनेत्युपनिबन्धो ग्रन्थः । वेदश्च—'यद्वै किंचन मनुरवदत्तद्भेषजं भेषजतायै[3]' इति ।

1 "सूर्यनक्षत्रवर्जितः कालः समयाध्युषितशब्देनोच्यते । उदयात्पूर्वं अरुणकिरणवान्प्रविरलकोऽनुदितकालः । परस्परविरुद्धकालश्रवणेऽपि सर्वथा विकल्पेनाग्निहोत्रहोमः प्रवर्तते । देवतोद्देशेन द्रव्यत्यागगुणयोगात् यज्ञशब्दोऽत्र होमे गौणः" (कुल्लूकभट्टः)

2 "अतुल्यबलयोस्तु बाध एव । तेन श्रुतिस्मृत्योर्विरोधे स्मृतिरेव बाध्यते । श्रुतौ हि प्रत्यक्षः शब्दः । स्मृतौ आनुमानिकः । न चानुमानं प्रत्यक्षविरोधे प्रमाणं भवति । एवं स्मृत्याचारविरोधे मातुलदुहितृपरिणयनादि आचारो बाध्यत इति । तत्र हि आचारात् स्मृत्यनुनुमानमिति ।" (मस्करिः)

3 This is a mix-up of 'यद्वै किंच मनुरवदत्तद्भेषजम्' (तै. सं., II, 2, 10, 2) and 'मनुर्वै यत्किंचिदवदत्तद्भेषजतायै' (ताण्ड्यब्राह्मण, २३, १६, ७).

<u>गौतमः</u>—[११, २२]

देश-जाति-कुलधर्मा-श्चाम्नायैरविरुद्धाः प्रमाणम् ॥[1]

'आम्नायैः' वेदाद्यैः श्रुतिस्मृत्यादिभिः।

स्मृत्यनुक्तौ <u>भविष्यपुराणे</u>

श्रुत्या सह विरोधे तु बाध्यते विषयं विना।
व्यवस्थयाऽऽविरोधेन कार्योऽन्यत्र परीक्षकैः[2] ॥
स्मृत्यर्थेन विरोधे तु अर्थशास्त्रस्य बाधनम्।
परस्परविरोधे तु न्याययुक्तं प्रमाणवत् ॥
अदृष्टार्थे विकल्पस्तु व्यवस्थासंभवे सति।
स्मृतिशास्त्रविकल्पस्तु आकांक्षापूरणे सति ॥

'अविरोधे' व्यवस्थाया अन्यत्र विषयः कार्य इत्यर्थः। 'स्मृत्यर्थेन' धर्मशास्त्रार्थेन। 'अर्थशास्त्रस्य' मन्वादिप्रणी-

1 'देशधर्मः' कौतुकमङ्गलादिः। 'जातिधर्मः' आभीरादीनां दन्तरागभावादिः। 'कुलधर्मो' दक्षिणतश्चूडा वसिष्ठानां इत्यादि। (मस्करिभाष्ये).

2 इदं चण्डेश्वरव्याख्यानम् (कृ. र., ३७) :—'विषयं विना' कुत्रापि विषये अवकाशमन्तरेण। 'स्मृत्यर्थेन' धर्मशास्त्रार्थेन 'अर्थशास्त्रस्य' दण्डनीत्यादेः। परस्परं अर्थशास्त्रयोरेव न्यायमूलं प्रामाणिकम्। 'अदृष्टार्थे' धर्मशास्त्रार्थे विकल्पः, 'व्यवस्थासंभवे' विशेषव्यवस्थितिसंभवेऽसति, सति तु व्यवस्थैव। 'स्मृतिशास्त्रविकल्पः' धर्मशास्त्रयोः विरोधे 'विकल्पः'। 'आकांक्षापूरणे' आकांक्षायां सत्यां तदुपबृंहणे समुच्चय एव। तेन साकांक्षत्वात् स्मृत्यादीनां समुच्चयः सूचितः।"

अत्र वी. मि., परिभाषाप्रकाशे (पृ. २८). अभिहितम्—

"'विषयं विना' कुत्राऽपि विषयेऽवकाशमन्तरेण। यतः स्मृति 'बाध्यते' बाधितार्थिका भवति, अतस्तस्या 'अविरोधेन' व्यवस्थायै 'अन्यत्र' विरुद्धश्रुत्यदर्शनकालादौ विषयः 'कार्यो' बाधितार्थकत्वं कल्पनीयमिति कल्पतरुस्वरसः। 'व्यवस्थया' इति चतुर्थ्यर्थे तृतीया। शबरानुसारिणस्तु 'विषयं विना' विषयबाधाद्विरुद्धा स्मृतिर्बाध्यत एव। यत्र तु विषयान्तरकल्पनं भवति तत्राह व्यवस्थयेत्यादीत्याहुः। भाट्टास्तु विरुद्धा स्मृतिर्विषयं विना श्रुतिमूलकत्वसन्देहेन प्रामाण्यसन्देहात् विषयनिश्चयं विना बाध्यते तत्प्रतिपाद्यार्थानुष्ठानं बाध्यते इत्यर्थमाहुः।"

तस्यैव र[redacted]देः। व्यवस्थाऽसंभवे व्यवस्थायां असति अदृष्टार्थयोः विकल्पः। 'आकांक्षापूरणे' एतेन साकांक्षत्वेन [redacted] समुच्चयः सूचितः।

अथ अङ्गिराः

प्रमाणानि प्रमाणज्ञैः परिपाल्यानि यत्नतः।
सीदन्ति हि प्रमाणानि प्रम[redacted]स्थितैः॥
प्रमाणसहितं यत्स्यात्तत् सर्वं गम्यते सुखम्।
अप्रमाणप्रमेयस्य दुःखेनाऽधिगमो भवेत्॥

## अथ निमित्ततः

तत्र शङ्खलिखितौ[1]

तत्र धर्मलक्षणानि—देशः काल उपायो द्रव्यं श्रद्धा पात्रं त्याग इति। समस्तेषु धर्मोदयः साधारणो[2] ऽन्यथा विपरीतः[3]। श्रद्धापात्रसंपन्नो धर्मः कालापेक्षः। श्रद्धाद्रव्योत्पत्तिरिति कालस्तन्मूलो देशः।

'देशः' ब्रह्मावर्त्तादिः। 'कालः' संक्रान्त्यादिः। 'उपाय' इतिकर्तव्यता। ['द्रव्यं' गवादि] 'श्रद्धा' शास्त्रार्थे दृढप्रत्ययः[4]। श्रद्धा दृढद्रव्योत्पत्तिरिति कालः। अयमपि

1 कृ. र., पृ. ४१; वीर. मि. परि., ५३.

2 अपरार्क reads—'साधारणो न्यायो ऽन्यथा विपरीतः' "अपरार्के तु 'साधारण' इत्यस्यानन्तरं 'न्याय' इत्यपि पाठो दृश्यते" (वी. मि., ५३).

3 शङ्खवचनमिति अपरार्केणाभिहितम् (पृ. ८).

cf. याज्ञवल्क्य, १, ६—

देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम्।
पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम्॥

4 वी. मि., परि., ५३—"'पात्रं' विद्यातपोवृत्तसंपन्नम्। 'त्यागः' स्वस्वत्वनिवृत्तिपूर्वकः परस्वत्वोत्पत्तिफलको व्यापारविशेषः। समस्तेषु सत्सु धर्मोदयः विशिष्टदान-

संक्रांत्यादिवद्दानादिधर्मकालः। तन्मूलो देशः। एवंभूत-कालसंपत्तौ देशोऽपि धर्मः सम्पद्यत इत्यर्थः[1]।

विष्णुपुराणे [२, ३, १]

उत्तरं यत्समुद्रस्य हिमाद्रेरेव दक्षिणम्।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः॥

तथा [२, ३, २३–२५]

अत्र जन्मसहस्राणां सहस्रैरपि सत्तम।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयात्[2]॥
गायन्ति देवाः किल गीतकानि
धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात्॥
कर्माण्यसंकल्पिततत्फलानि
सत्यस्य विष्णोः परमात्मभूते।
अवाप्य तां कर्ममहीमनन्ते
तस्मिन् लयं ये त्वमलाः प्रयान्ति॥

भविष्यपुराणे[3]

ब्रह्मावर्तः परो देशः ऋषिदेशस्ततः परः।

धर्मफलोदयः। अन्येष्वपि सर्वाङ्गसम्पन्नेष्वेव यागादिषु विशिष्टफलोदय इत्याह, 'साधारण' इति। सर्वधर्मसाधारणोऽयं न्याय इत्यर्थः।"

1 See कृ. र., ४१—for long comment.

2 'पुण्यसंयमात्' इति मूलमातृका.

3 Text corrupt. Restored from कृ. र., ४२.

वीरमित्रोदये (परिभाषाप्रकाशे, पृ. ५५)—

"'अनन्तर' इत्यत्र नञ् ईषदर्थे, अनुदरा कन्येतिवत्। अन्तरशब्दो भेदवचनः। भेदश्च वैलक्षण्यम्। तच्च न्यूनतया। उत्तरोत्तरं न्यूनदेशस्यैवाभिधानात्। यथा मध्यदेशस्ततो न्यून इति। तथा च ईषन्न्यून इति॥"

मध्यदेशस्ततो न्यून आर्यावर्तस्त्वनन्तरः ॥

'अनन्तरो' ईषन्न्यूनः। नञीषदर्थे, अलवणा यवागू-रितिवत्।

मनुः [२, १८-२४]

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥
तस्मिन् देशे य आचारः पारम्पर्यक्रमागतः।
वर्णानां सान्तरालानां सदाचारः स उच्यते[1] ॥
कुरुक्षेत्रं च मत्स्याश्च पाञ्चालाः शूरसेनकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः[2] ॥
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः[3]।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥
हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥
आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्।
तयोरेवान्तरं गिर्योरार्यावर्तं प्रचक्षते ॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।

1 'परम्परैव' पारम्पर्यम्। परम्पराक्रमेण आगतः। तेन आधुनिकाचारो वारितः। 'अन्तरालाः' सङ्करजातयः। यद्यपि देशान्तरेऽपि सदाचाराः सन्ति, तस्मिन्नपि च देशे अनुपनीतसहभोजनादयो अनाचाराः परम्परागता बहवो दृश्यन्ते, तथाऽपि सदाचारलक्षणे नैतद्वाक्यस्य तात्पर्यं किं तु तद्देशप्रशंसामात्र इति नान्यदेशाचारस्याप्रामाण्यमिति मेधातिथिः (वी. मि., परि., ५६).

2 'अनन्तरः' ईषन्न्यूनः (वी. मि.. ५६).

3 "'एतद्देशप्रसूतस्य' इति वचनं देशप्रशंसापरं तत्प्रकरणपाठात्, न तु तद्देशप्रसूतेभ्य एव धर्मशिक्षणनियमार्थम्" (वी. मि., परि., ५६).

स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परम्[1] ॥
एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः ।
शूद्रस्तु यस्मिन् तस्मिन्वा निवसेद्वृत्तिकर्षितः ॥

'अन्तरालाः' सङ्करजातयः । गङ्गाद्याश्च बहुवचनान्ता देशपराः । मत्स्यो विराटदेशः । 'पाञ्चालाः' कान्यकुब्जादिदेशाः । 'शूरसेनजाः' मथुरादिदेशाः । 'अग्रजन्मनः' ब्राह्मणस्य । 'विनशनं' सरस्वत्या नद्या अन्तर्धानदेशः । 'स्वभावतः' अन्नपानादिना । 'यज्ञियः' यज्ञार्हः । 'म्लेच्छदेशः' यज्ञाद्यनर्हः । 'वृत्तिः' स्वकुटुम्बभरणोचितधनोपायः । तदभावेन 'कर्षितः' पीडितः[2] ।

वसिष्ठः—[१, ८–१५]

धर्मः आर्यावर्ते प्रागदर्शनात् प्रत्यक् कालकावनादुदक्पारियात्रात् दक्षिणेन हिमवतः उत्तरेण विन्ध्याद्रेः । [तस्मिन् देशे] ये धर्मा ये च आचारास्ते सर्वे प्रत्येतव्याः । न त्वन्ये प्रतिलोमकक्षधर्माणः । एतं आर्यावर्तमित्याचक्षते । गङ्गायमुनयोरन्तराप्येके । यावद्वा कृष्णमृगो विचरति तावद्ब्रह्मवर्चसं इत्यन्ये । अथापि भाल्लविनो निदाने गाथामुदाहरन्ति ।

1 "प्रायेण ह्येषु देशेषु म्लेच्छा भवन्ति । न त्वनेन देशसंबन्धेन म्लेच्छा लक्ष्यन्ते. स्वतस्तेषां प्रसिद्धेर्ब्राह्मणादिजतिवत् । अथार्थद्वारेणायं शब्दः प्रवृत्तो म्लेच्छानां देश इति । तत्र यदि कथञ्चित ब्रह्मावर्तदेशमपि म्लेच्छा आक्रमेयुः तत्रैवावस्थानं कुर्युः भवेदेवासौ "म्लेच्छदेशः" । तथा यदि कश्चित् क्षत्रियादिजातीयो राजा साध्वाचरणो म्लेच्छान् पराजयेत् चातुर्वर्ण्यं वासयेत् म्लेच्छांश्च आर्यावर्ते इव चाण्डालान् व्यवस्थापयेत् सोऽपि स्यात् यज्ञियः । यतो न भूमिः स्वतो दुष्टा । संसर्गाद्धि सा दुष्यत्यमेध्यापहतेव । अत उक्तदेशव्यतिकरेणाऽपि सति सामग्र्ये त्रैवर्णिकेनाकृष्णमृगचरणेऽपि देशे यष्टव्यमेव" । (मेधातिथिः)

2 Comment reproduced by कृ. र., ४४.

पश्चात् सिन्धुर्वितरणी सूर्यस्योदयनं पुरः ।
यावत् कृष्णोऽभिधावति तावद्वै ब्रह्मवर्चसम् ॥

['प्रतिलोमकक्षधर्माणः'] विपरीता अस्फुटस्वभावाः । 'कक्ष'शब्देन घनतृणाद्युद्देशवचनेनास्फुटता लक्ष्यते । पुनरार्यावर्तानुवादो ऽन्वर्थसंज्ञाप्रदर्शनार्थः । 'आर्या' स्त्रयो वर्णाः, आवर्तन्ते यस्मिन्निति । ततश्चार्यैरत्रैव वस्तव्यम् । 'ब्रह्मवर्चसं' वृत्तस्वाध्यायसंपत्तिः । 'भाल्लविनः' छन्दोगशाखिनः । 'निदानं' छन्दोगसूत्रम् । 'सिन्धु'र्नदीविशेषः । 'वितरणी' जनकपर्वतसमीपे मल्लदेशे परशुरामेण धनुःकोट्या कुण्डं भित्वा निर्मितेति तत्रत्यजनप्रसिद्धा[1] ।

शङ्खलिखितौ[2]

देश आर्यो गुणवान् प्रागस्तादर्वागुदयाद्यावदुवा गिरयो, यावत् पुण्याः सरितः, प्राक् सिद्धत्वाद्देशः सनातनः पुण्यः । कृष्णमृगो वा यावद्विचरति तावदाचारः स्यात् । प्राक् सिन्धुसौवीराद्दक्षिणेन हिमवतः, पश्चात् काम्पिल्यादुदक् पारियात्रादनवद्यं ब्रह्मवर्चसं सर्वेषामतो अन्यदेशजातिकुलधर्मणामन्वयाः ।

'अनवद्यं' अविकलम् । 'अन्वयाः' सन्तानाः । प्रत्येतव्या इति शेषः ।

पठीनसिः

आहिमवतः, आ च कुमार्याः, सिन्धुर्वैतरणी नदी, सूर्यस्यादयनं पुरः, यावद्वा कृष्णमृगो विचरति तत्र धर्मः चतुष्पादो विचरति ।

1 Comment reproduced by वी. मि. परि., ५८.
2 वी. मि. परि., ५७-५८.

संवर्तः

स्वभावाद्यत्र विरमेत् कृष्णसारः सदा मृगः ।
धर्मदेशः स विज्ञेयो द्विजानां धर्मसाधनः ॥

[1]विष्णुः—[८४, १–४]

न म्लेच्छविषये श्राद्धं कुर्यात् । न गच्छेन्म्लेच्छविषयं । परनिपानेष्वपः पीत्वा तत्साम्यमुपगच्छति ।

चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न दृश्यते ।
तं म्लेच्छदेशं जानीयादार्यावर्तमतः परम् ॥

बौधायनः—[१, २, १४]

[2]आनर्तकाङ्गमगधाः सुराष्ट्रा दक्षिणापथाः ।
उपावृत् सिन्धुसौवीरा एते सङ्कीर्णयोनयः ॥

आरट्टान् कारस्करान् पुण्ड्रान्[3] सौवीरान् वङ्गान् कलिङ्गान् प्रासूनानिति च गत्वा पुनस्तोमेन यजेत सर्वपृष्ठया वा । अथाप्युदाहरन्ति—

पद्भ्यां स कुरुते पापं यः कलिङ्गान् प्रपद्यते ।
ऋषयो निष्कृतिं तस्य प्राहुर्वैश्वानरं हविः ॥

'आनर्तकः' द्वारका यस्मिन् देशे । 'अङ्गः' चम्पाप्रदेशः[4] ।

1 'विष्णु' omitted in Manuscript and passage corrupt. Corrected from printed *Visnusmrti*.

2 'अवन्तयोऽङ्गमगधाः' इति मुद्रितबौधायने ।

3 'पाण्ड्यान् पुण्ड्रान्' इति वी. मि. परि., ५८ । 'प्रानूनानिति' काशीमुद्रितबौधायनसूत्रे.

4 'अयं निषेधस्तीर्थयात्रां विना' इति मित्रमिश्रः (वी. मि. परि., ५८).

॥ २ ॥

# [1]अथ परिभाषा

तत्र भविष्यपुराणे

सम्यक् संसाधनं कर्म कर्तव्यमधिकारिणा ।
निष्कामेन सदा वीर काम्यं कामान्वितेन तु ॥
आचारयुक्तः श्रद्धावान् वेदज्ञोऽध्यात्मवित्तमः ।
कर्मणां फलमाप्नोति न्यायार्जितधनश्च यः ॥

अयमर्थः । 'संसाधनं' यथाविहितसाधनम् । 'अधिकारिणा' अर्थिना विदुषा समर्थेन । 'सम्यक्' [यथा सामर्थ्यं] प्रथमकल्पादिना कर्म कर्तव्यम् । काम्ये कामान्वितत्वं विशेष इति । 'आचारो' मन्वादिभिरुक्तोऽतिथि पूजादि । 'अध्यात्मवित्तमः' परलोकभागिन्यात्मनि दृढप्रत्ययवान् । 'न्यायार्जितधनः' स्ववृत्यार्जितकर्माङ्गधनः । 'फलं' संपूर्णमिति शेषः ।

आपस्तम्बः—[२, २९, १-२]

प्रयोजयितानुमन्ता कर्तेति स्वर्गनरकफलेषु भागिनः । यो भूय आरभते तस्मिन् फलविशेषः ।

योगियाज्ञवल्क्यः

विधिदृष्टं च यत् कर्म करोत्यविधिना[2] तु यः ।

1 वी. मि. परि., ७०.
2 'अविधिना' विध्यतिक्रमेण (वी. मि. परि., ७१)

फलं न किञ्चिदाप्नोति क्लेशमात्रं तु तस्य तत् ॥

'विधिदृष्टं' यथाविहितम् ।

[1]मनुः—[११, ३१]

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥

'प्रभुः' समर्थः । 'सांपरायिकं' पारलौकिकम् ।

[2]छन्दोगपरिशिष्टे कात्यायनः—[१, ३, १–३]

अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम् ।
अक्रिया च परोक्ता च तृतीया वाऽयथाक्रिया ॥
स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं च यः ।
कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य यत्कृतम्[3] ॥
यन्नाम्नातं स्वशाखायां परोक्तमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥

'[4]परोक्ता' परशाखोक्ता । 'अयथाक्रिया' विहितेतरप्रकारेणानुष्ठानम् । [यथा] अग्निहोत्रं यजुर्वेदशाखासु

1 वी. मि. परि., ७१.

2 वी. मि. परि., ७१.

3 'चेष्टितं' इति मुद्रितपुस्तके (पृ. ४९).

4 वी. मि. परि. (७२)—"अक्रियापदवाच्या वक्ष्यमाणप्रकारेण त्रिविधा । 'अक्रिया' अकरणम् । 'परोक्ता' स्वशाखोक्तप्रकारं त्यक्त्वा अपरशाखोक्तप्रकारेणानुष्ठानम् । 'अयथाक्रिया' विहितेतरप्रकारेणानुष्ठानम् । 'कर्तुमिच्छति' करोति । 'दुर्मेधाः' शास्त्रविरुद्धार्थज्ञानवान् । यत् स्वशाखायां नोक्तं परशाखायां चोक्तं सामान्यशास्त्रेण च प्राप्तं, यथा छन्दोगानां याजुर्वैदिकमग्निहोत्रं, यच्च स्वशाखोक्तस्य आकांक्षापूरकत्वेन स्वरूपतो अविरोधि, तद्धर्मज्ञैः कर्तव्यमेवेति छन्दोगपरिशिष्टटीकायां नारायणः । शूलपाणिना तु श्राद्धविवेके 'अविरोधि च' इति पठित्वा चकारात् आकांक्षितं इति व्याख्यातम् । एवं च स्वशाखायां अनुक्तं परशाखोक्तं प्रधानं न ग्राह्यम् । अङ्गन्तु स्वशाखायां अनुक्तं परशाखायामुक्तमविरोधि आकांक्षितं च ग्राह्यमिति पर्यवसितोऽर्थः ।"

विहितं छन्दोगादिभिरनुष्ठीयते। शाखान्तराधिकारणन्यायेन सर्वस्मृतिषु यथाप्रत्ययत्वे गृह्येष्वपि प्रसक्तेऽपवादमाह ।

गृह्यपरिशिष्टकारः

बह्वल्पं वा स्वगृह्योक्तं यस्य यावत् प्रकीर्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥

यथा [छन्दोगपरिशिष्टे कात्यायनः][1]—[१, ३, ४–६]

प्रवृत्तमन्यथा कुर्याद्यदि मोहात्कथञ्चन ।
यतस्तदन्यथाभूतं तत एव समापयेत् ॥
समाप्ते यदि जानीयान्मयैतदयथाकृतम् ।
तावदेव पुनः कुर्यान्नावृत्तिः सर्व ,मणः ॥
प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः ।
तदङ्गस्याक्रियायां तु नावृत्तिर्न च तत्क्रिया ॥

'प्रवृत्तं' प्रारब्धम् । 'अन्यथा' विपरीतम् । तत्कर्मकरणे सत्येव क्रमाद्यन्यत्वेन 'यतो' यस्मात्पदा[र्था]दारभ्य तत्कर्माऽन्यथा जातं त[त]एवारभ्य पुनर्यथोक्तप्रकारेण कुर्यादित्यर्थः । 'समाप्ते' इति, समाप्ते तु कर्मणि अन्यथाकरणज्ञाने सति, यत्पदार्थान्यथाकरणं ज्ञा[तं] तमेव पदार्थं पुनः कुर्यात् । न पुनस्तदुत्तरानपि पदार्थान् । एतदन्यथाकरणविषयम्। प्रधान येत्यादि त्वकरणविषय । प्रधानस्य कर्मणः यत्राकरणं भवति तत्साङ्गमेव पुनः कत०य । तदङ्गस्य वाऽकरणे न साङ्गप्रधानावृत्तिर्नापि तावन्मात्रस्याङ्गस्य करणं, किं तु प्रायश्चित्तमेव कार्यम्[2] ।

1 वी. मि. परि., ७३ मूलमातृकायां ग्रन्थनाम न लब्धम् ।

2 वी. मि. परि., ७३. cites the entire commentary from the कल्पतरु, and adds that the interpretation is accepted by all writers like Hemādri and Nārāyaṇa, the *tīkākāra* on *Kātyāyana-pariśiṣṭa*.

हारीतः

अङ्गुष्ठस्योत्तरा रेखा ब्राह्मं तीर्थं, कनिष्ठिकायाः, पश्चात् प्राजापत्यं, अग्रेऽङ्गुलीनां दैवं, अङ्गुष्ठप्रदेशिन्योरन्तरा पित्र्यं, मध्ये आग्नेयम्[1]।

वसिष्ठः—[३, ६६]

अङ्गुल्यग्रेषु मानुषम्।

शङ्खः

कायं कनिष्ठिकामूले तीर्थमुक्तं द्विजस्य तु।
अङ्गुष्ठमूले च तथा प्राजापत्यं प्रकीर्तितम्॥

'कायं' को ब्रह्मा साऽस्य देवतेत्यर्थे 'कस्येत्' इत्यण् इत्वं च[2]।

योगियाज्ञवल्क्यः

[3]मध्ये सौम्यं प्रतिष्ठितम्।

'मध्ये' पाणिमध्ये।

बौधायनः—[१, ८, १२-१३]

अङ्गुलिमूले [ब्राह्मं तीर्थम्। अङ्गुष्ठाग्रं पित्र्यमङ्गुल्यग्रं] दैवमङ्गुल्यग्र[? लिमूल]मार्षम्।

शङ्खलिखितौ

[अङ्गुष्ठमूलस्योत्तरतः प्रागग्रायां रेखायां ब्राह्मं तीर्थं,

1 'मध्ये' करमध्ये (वी. मि. परि., ७५).
2 वी. मि. परि., ७६:—'ततश्च वृद्धिरायादेशश्च'।
3 पूर्णश्लोकस्तु—अङ्गुष्ठमूले ब्राह्मं स्यात् दैवं त्वङ्गुलिमूर्धनि।
प्राजापत्यं तु मूले स्यात् मध्ये सौम्यं प्रतिष्ठितम्॥

प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यं, कनिष्ठिकातलयोरन्तरं प्राजापत्यं, पूर्वेणाङ्गुलिपर्वाणि दैवम् ।

एवं च कनीनकामूलस्य[1]] तीर्थस्य प्राजापत्यकायदैवसंज्ञाः, आग्नेयसौम्यब्राह्मतीर्थसंज्ञा हस्तमध्यस्य, अङ्गुल्यग्रस्य दैवमानुषार्षतीर्थसंज्ञाः, [अङ्गुष्ठमूलस्य प्राजापत्यब्राह्मतीर्थसंज्ञे, तदुत्तररेखया ब्रह्मतीर्थसंज्ञा,] तर्जन्यङ्गुष्ठमध्यस्य पितृतीर्थसंज्ञेत्युक्तं भवति ।

मनुः—[२, ५८]

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन[2] ॥

'त्रैदशिकं' दैवम् ।

हारीतः

[उपस्पर्शनं ब्राह्मेण] आचमनहोमतर्पणानि प्राजापत्येन कुर्यात् । मार्जनार्चनबलिकर्मभोजनानि दैवेन । पित्र्यर्थान् पित्र्येण । प्रतिग्रहमाग्नेयेन प्रतिगृह्णीयात्[3] ।

भविष्यपुराणे

कमण्डलूपस्पर्शनं दधिप्राशनमेव च ।
सोमतीर्थेन राजेन्द्र सदा कुर्याद्विचक्षणः ॥

1 [ ] त्रुटितं मूलमातृकायाम्; वी. मि. परि., ७६.

2 "'कः' प्रजापतिः, तदीयः । 'त्रैदशिको' देवः ताभ्यां वा । पित्र्येण तु तीर्थेन न कदाचिदाचमेत्, अप्रसिद्धत्वात् ।" (कुल्लूकः)

3 वी. मि. परि., ७७.

मार्कण्डेयपुराणे—[३४, १०९][1]

नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम् ।
प्राजापत्येन तीर्थेन यच्च किञ्चित्प्रजापतेः ॥

ब्रह्मपुराणे[2]

[मूलरेखामुखाङ्गुष्ठमणिबन्धेषु मध्यगम्[3] ।]
प्राजापत्यं महातीर्थं विप्रस्तेनाचमेत्सदा ॥
धनायुर्दाररेखासु सोमतीर्थं तु मध्यमम् ।
लाजादेहवनं तत्र कर्तव्यं वपनं तथा ॥

'वपनं' व्रीह्यादिनिर्वापः ।

[छागलेयः[4]]

हस्तमध्ये ब्रह्मतीर्थं दक्षिणाग्रहणे च यत् ।

ॐकार इत्यनुवृत्त्यौ ।

आपस्तम्बः—[१, १३, ८–९]

यज्ञेषु चैतदादयः प्रसवाः ।

प्रणय इत्यादयः 'प्रसवा' अनुज्ञानवाक्यानि ।

[लोके च भूतिकर्मसु एतदादीन्येव वाक्यानि स्युः यथा पुण्याहं स्वस्त्यृद्धिमिति ।

'भूतिकर्मसु' पाणिग्रहणादिषु । 'एतदादीनि' ओंकारादीनि स्वस्त्यादिवचनानि भवेयुः[5] ॥]

1 ब्रह्मपुराणं, २२१, १००.
2 ब्रह्मपुराणे, २२१ अध्याये न लब्धौ.
3 [ ] मूलमातृकायां त्रुटितं, वीरमित्रोदयेण परिष्कृतमत्र.
4 वी. मि. परि., ७८.
5 'वाक्यानि' 'पुण्याहं भवन्तो ब्रुवन्तु' एवमादीनि, । इति वी. मि., परि., ७८.

[महाभारते]

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥

तथा

त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वशः ।
तिस्रः सार्धास्तु कर्तव्या मात्राः सर्वार्थचिन्तकैः ॥
देवताध्यानकालेषु प्लुतं कुर्यान्न संशयः[1] ।

यमः

पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते ।
एतदेव निरोङ्कारं ब्रूयात् क्षत्रियवैश्ययोः ॥

विष्णुः—[६४, ४०]

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणां तथा जप्ये दाने च विधिनोदिते[2] ॥

'पवित्राणां' मंत्राणां पावमान्यादीनाम् । मन्त्रः पवित्रं इत्युच्यते इति निरुक्तकारवचनात्[3] ।

वायुपुराणे

क्रियां यः कुरुते होमे धौतवस्त्रधरो भवेत् ।
अलंकृतश्शुचिर्मौनी श्राद्धादौ विजितेन्द्रियः ॥

बौधायनः—[२, १५, ५]

काषायवासाः[यान्]कुरुते जपहोमपरिग्रहान् ।

1 वी. मि. thus continues—" तैलधारावदच्छिन्नं दीर्घघण्टानिनादवत् " ।
2 'विधिबोधिते' 'विधिचोदिते' इति पाठभेदौ.
3 वी. मि. परि., ८०.

न तद्देवगमं भवति हव्यकव्येष्वथो[1] हविः ॥

'काषायवासाः' वृक्षक्काथादिना रक्तवासाः ।

व्यासः

आर्द्रवासास्तु यः कुर्याज्जपहोमपरिग्रहम् ।
सर्वं तद्राक्षसं विद्याद्बहिर्जानु[2] च यत् कृतम् ॥

योगियाज्ञवल्क्यः

परिधानाद्बहिःकक्षा निबद्धा ह्यासुरी भवेत् ।
धर्मकर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥

'बहिःकक्षा' बहिर्निर्गतेत्यर्थः[3] ।

विष्णुपुराणे—[३, १२, २०]

होमदेवार्चनाद्यास्तु क्रियास्वाचमने तथा ।
नैकवस्त्रः प्रवर्तेत द्विजवाचनके जपे ॥

'द्विजवाचनके' द्विजस्वस्तिवाचनादौ ।

शातातपः

सव्यादंसात्परिभ्रष्टः कटिदेशे धृताम्बरः ।
एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेत्[4] ॥

शाट्यायनः

दानमाचमनं होमं भोजनं देवतार्चनम् ।

1 'हव्यं, देवदैवत्यं, 'कव्यं' पितृदैवत्यम् । (गोविन्दस्वामी).

2 'बहिर्जानु' जानुभ्यां बहिः करौ कृत्वा इत्यर्थः (वी. मि. परि. ८२).

3 'कक्षा' परिधानग्रन्थिः, सा च परिधानवस्त्राद्रुपरिवेष्टनादिना बहिः न कार्येति केचित् । 'कक्षा' वस्त्रोभयप्रान्त इत्यन्ये । (वी. मि., परि., ८२).

4 अत्र अम्बरपदं उत्तरीयपरम् । तथा च सव्यादंसात परिभ्रष्टं कटिदेशधृतं चाम्बरं यस्य इत्यर्थः । वी. मि. परि., ८३).

प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥
[1]आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा ।
कृतावसक्थिको यस्तु प्रौढपादः स उच्यते ॥

मार्कण्डेयपुराणे

सूर्योदयं विना नैव स्नानदानादिकाः क्रियाः ।
अग्नेर्विहरणं चैव क्रतुस्तावच्च[2] लक्ष्यते ॥

'सूर्योदयं विना' इति सूर्योदयशब्देन उषःकालो लक्ष्यते । तं विना रात्रौ न कार्यं स्नानदानादीति तात्पर्यार्थः[3] ।

दक्षः

देवकार्याणि पूर्वाह्णे मनुष्याणां तु मध्यमे ।
पितॄणामपराह्णे च कार्याणीति विनिश्चयः ॥

छन्दोगपरिशिष्टे कात्यायनः—[१, १, ६–८]

यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः[4] ॥

1 'आसनं' पीठादि । अत्रारूढपदस्वरसात् आचाराच्च सम्पूर्णपादतलभागस्यैव आसनसंबन्धो निषिद्धो, न तु पादपार्श्वादिभागस्य इति वदन्ति । यत्र सन्ध्योपासनादौ आसनोपवेशनं विहितं तत्र आसनमङ्गम्, आचमनादौ च निषिद्धम्, इतरकर्मसु अविरुद्धम् । आचारादार्द्रासनादौ न निविशन्ति । असंभवे तत्र श्रीकारं लिखित्वा उपविशन्ति केचित् । 'जानुनो जङ्घयो'र्वा आरूढपाद इत्यनुषज्यते । 'कृतावसक्थिको' वस्त्रादिना कृतपृष्ठजानुजङ्घाबन्धः । (वी. मि. परि., ८३–८४).

2 'क्रतुस्तावच्च लक्ष्यते' इति कृ. र., ४६ । 'कृत्वा भावश्च' इति मूलमातृकापाठः । मुद्रितमार्कण्डेयपुराणे श्लोकः न लब्धः ।

3 वी. मि. परि., ८४.

4 यत्र स्मृत्यादौ हस्तसाध्यं कर्मोपदिश्यते कर्तुरङ्गं च विशिष्य नोच्यते, यत्र चाक्रमणादौ पादादिकं विशिष्य नोच्यते, तत्र दक्षिणमेव हस्तपादादिकं ग्राह्यमिति मित्रमिश्रैः व्याख्यातम् (पृ. ८४).

यत्र दिङ्नियमो नास्ति जपहोमादिकर्मसु ।
[1]तिस्रस्तत्र तु विज्ञेया ऐन्द्रीसौम्याऽपराजिताः ॥
आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥

'सौम्या' उत्तरा 'अपराजिता' ऐशानी ।

योगियाज्ञवल्क्यः

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥
अविदित्वा तु यः कुर्याद्याजनाध्यापनं तथा ।
होममन्तर्जलादीनि तस्य चाल्पफलं भवेत् ॥

'अन्तर्जलादीनि' जलमध्ये क्रियमाणान्यघमर्षणादीनि[2] ।

तथा

यश्च जानाति तत्त्वेन आर्षं छन्दश्च दैवतम् ।
विनियोगं ब्राह्मणं च मन्त्रार्थं ज्ञानकर्म च ॥

ज्ञानरूपा क्रिया 'ज्ञानकर्म' । अनुष्ठेयार्थस्मरणं प्रयोजनमिति यावत् ।

[3]एकैकस्य ऋषेः सोऽपि वन्द्यो ह्यतिथिवद्भवेत् ।
देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः ॥

'सायुज्यं' सहयोगित्वम् ।

1 'तिस्रस्तत्र दिशः प्रोक्ता' इति मुद्रितपुस्तके (पृ. १९).
2 वी. मि. परि., ८५.
3 "एकैकस्य ऋषेः" एकैकस्य मन्त्रस्य आर्षादिकं यस्तत्त्वेन जानातीति पूर्वेणान्वय इति मदनरत्नप्रदीपव्याख्या । (वी. मि. परि., ८६).

पूर्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः ।
अधिकारो भवेत्तस्य रहस्यादिषु कर्मसु ॥

['रहस्यादिषु'] रहस्यजपादिषु ।

येन यद्दृषिणा दृष्टं सिद्धिः प्राप्ता च येन वै ।
मन्त्रेण तस्य तत्प्रोक्तं ऋषेर्भावस्तदार्षकम् ॥
छादनात् छन्द उद्दिष्टं वाससी इव चाकृतेः ।
आत्मा संछादितो देवैर्मृत्योर्भीतैस्तु वै पुरा ॥
आदित्यैर्वसुभी रुद्रैस्तेन छन्दांसि तानि वै ।

'आकृतेः' शरीरसंस्थानस्य ।

[यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या ।
तदाकारं भवेत्तस्य देवत्वं देवतोच्यते ॥][1]

यस्य यस्य तु मन्त्रस्य या या देवता येन येनेन्द्रादिरूपेणोद्दिष्टा प्राधान्येन प्रतिपादिता तदाकारमेव [तस्य मन्त्रस्य] देवत्वम्। तस्येति[अनेन] व्यवहितेन मन्त्रस्येत्यनेन सम्बन्धः। तेनैतदुक्तं भवति। तस्य तस्य मन्त्रस्य सा वै देवता[2]।

[योगियाज्ञवल्क्यः[2]]

पुरा कल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च ।
अनेनेदं तु कर्तव्यं विनियोगः स उच्यते ॥
निरुक्तं यत्र मन्त्रस्य विनियोगः प्रयोजनम् ।
प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यते ॥

1 Omitted in MS.; Supplied by वी. मि., परि., ८७.
2 वी. मि., परि., ८७.

'प्रतिष्ठानं' विनियोगः। अन्ये तु 'प्रतिष्ठानं' आश्रय इति वदन्ति। अग्नीषोमप्रणयिनीनामृचामसावादित्य एक-विंशति उत्तमा प्रतिष्ठ इति तैत्तरीयब्राह्मणे[1]।

तथा

[1]एवं पञ्चविधं योगं जप्यकाले ह्यनुस्मरेत्।
होमे चान्तर्जले योगे स्वाध्याये याजने तथा॥

'योगं' ऋष्यादिसंबन्धम्। 'अन्तर्जले' अन्तर्जल-कार्ये स्नानादौ। 'योगे' योगाङ्गप्रणवजपादौ।

छन्दोगपरिशिष्टे कात्यायनः[2]

सदोपवीतिना भाव्यं सदा बद्धशिखेन तु।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्॥

आपस्तम्बः—[१, १५, १]

उपासने गुरूणां वृद्धानां अतिथीनां होमेज्यकर्मणि भोजने आचमने स्वाध्याये च यज्ञोपवीती स्यात्[3]।

[illegible]शिष्टे[4]

वामस्कन्धे यज्ञोपवीती दैवे, प्राचीन[illegible]रथा पितृयज्ञे, नाभ्यां द्विकण्ठासक्तमभिचारे, निवीतं आपृष्ठ-देश[illegible] ग्राम्यधर्मेषु।

'इतरथा' वामेतरस्कन्धे। 'द्विकण्ठावसक्तं' कण्ठ-पार्श्वद्वयावलम्बितम्।

1 वी. मि. परि., ८८
2 वी. मि. परि., ८९.
3 'गुरुणां सिद्धानां', 'जप्यकर्मणि' इति मूलमातृकायाम्.
4 Ms. corrupt: corrected from वी. मि., परि., ९०.

बौधायनः—[१, ८, ५–८]

यज्ञे[illegible]ाभेर्दक्षिणं बाहुमवधाय[1] शिरोऽवदध्यात्। विपरीतं पितृभ्यः। कण्ठावसक्तं निवीतं अधोऽवसक्तमधोवीतम्।

म॰ बौधायन पैठीनसयः[2]

अग्न्यागारे गवां गोष्ठे ब्राह्मणानां च संनिधौ।
स्वाध्याये भोजने चैव दक्षिणं पाण[illegible]द्धरे ॥

आपस्तम्बः

देवागारे तथा श्राद्धे गवां गोष्ठे तथाऽध्वरे।
दाने ह्याचमने चैव सन्ध्ययोः साधुसङ्गमे ॥
अग्न्यागारे विवाहे च स्वाध्याये भोजने तथा।
उद्धरेद्दक्षिणं पाणिं ब्राह्मणानां कूपापथे ॥

'उद्धरेद्दक्षिणं पाणिमिति' सव्ये अंसे वस्त्रं निधाय दक्षिणं बाहुमुत्तरीयाद्बहिः कुर्यादित्यर्थः[3]।

बौधायनः—[१, १०, १८]

[4]कर्मयुक्तो नाभेरधः स्पर्शं वर्जयेत्।

योगियाज्ञवल्क्यः

रौद्रपित्र्यासुरान् मन्त्रांस्तथा चैवाभिचारकान्।

1 "दक्षिणं बाहुमुद्धृत्य सव्यमाधाय शिरोऽवदध्यात्" इति मुद्रितबौधायने। कल्पतरुपाठ एव मित्रमिश्रैः आदृतम्।

2 मनु, ४, ५८; बौधायन, २, ६, ३८। 'स्वाध्याये वर्तमाने भोजनेऽपि बाहोरुद्धरणं नमस्काररूपेण। चशब्दः प्रशस्त-मङ्गल्य-देवायतन-प्रज्ञात-वनस्पत्यादि-प्रदर्शनार्थः।' (गोविन्दस्वामिविवरणे)। 'दक्षिणपाणिं वासस 'उद्धरेत्' बहिष्कुर्यात्' इति कुल्लूकः।

3 वी. मि. परि., ९०.

4 'नाभेरधस्स्पर्शनं कर्मयुक्तो वर्जयेत्' इति मुद्रितबौधायने.

व्याहृत्याऽऽलभ्य चात्मानमपः स्पृष्ट्वा ऽन्यदाचरेत्[1] ॥

छन्दोगपरिशिष्टे कात्यायनः—[१, २, १३–१४]

पित्र्यमन्त्रानुद्रवणे आत्मालम्भे अवेक्षणे ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥
मार्जारमूषिकास्पर्शे आक्रुष्टे क्रोधसंभवे ।
[2]निमित्तेषु च सर्वत्र कर्म कुर्वन्नपः स्पृशेत्[3] ॥

'पित्र्यमन्त्रानुद्रवणे' पित्र्यमन्त्रोच्चारणे । 'आत्मालम्भे' आत्माधिष्ठानहृदयस्पर्शे यज्ञादौ विहिते । अवेक्षणे तस्यैव [हृदयस्यैव] । एतदुभयं यज्ञादौ विहितम् । 'आक्रुष्टे' परुषभाषणे[4] ।

योगियाज्ञवल्क्यः

यदि वाग्यमलोपः स्याज्जपादिषु कथञ्चन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥

तथा

अज्ञानादथवा मोहात्प्रच्यवेताध्वरेषु यत् ।

1 'रौद्रपित्र्यासुरान्' रुद्र-पितृ असुर-देवताकान् । 'आभिचारिकान्' अभिचारसंबन्धिनः । 'आलभ्य' स्पृष्ट्वा । 'आत्मानं' आत्माधिष्ठानं हृदयम् । 'अन्यत्' जलस्पर्शनिमित्तजातीयात् अन्यत् । वी. मि., परि., ९१).

2 'निमित्तेष्वेषु सर्वेषु' इति मुद्रितपुस्तके (पृ. ४७).

3 'उपस्पृशेत्' इति मूलमातृका । न आचमेत, स्पर्शमात्रं विहितं इति एके [कृ. र., ५०.]

4 वी. मि. परि., ९१ :—"एतदुभयमपि यज्ञादौ विहितमेव निमित्तमिति कल्पतरुप्रभृतयः ॥ कृ. र., ५०—

"'अनुहरणे' पाठे, आत्मालम्भे आत्महनने, आत्मप्रशंसायाञ्चेति सागरः । आत्माधिष्ठानभूस्पर्शे अवेक्षणे तस्यैव, एते च स्पर्शावेक्षणे यज्ञादौ विहित इति कल्पतरुः" ॥

स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥

'मोहात्' विपर्ययज्ञानात्[1] ।

तथा

न कुर्यात्कस्यचित् पीडां कर्मणा मनसा गिरा ।
आचरन्नभिषेकं तु कर्माण्यन्यानि चाचरन् ॥

बौधायनः—[१, ३, ४०]

भोजनं हवनं दानमुपहारः परिग्रहः ।
बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥

'उपहारः' देवताद्यर्थमन्नाद्युपढौकनम्[2] ।

अङ्गिराः[1]

संध्ययोरुभयोर्जप्ये भोजने दन्तधावने ।
पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः ॥
गुरूणां सन्निधौ दाने योगे चैव विशेषतः ।
एषु मौनं समातिष्ठन् स्वर्गं प्राप्नोति मानवः ॥

वायुपुराणे[3]

दानं प्रतिग्रहो होमो भोजनं बलिरेव च ।
साङ्गुष्ठेन सदा कार्यमसुरेभ्यो ऽन्यथा भवेत् ॥

'साङ्गुष्ठेन' अङ्गुलीसहिताङ्गुष्ठेन ।

एतान्येव तु कर्माणि दानादीनि विशेषतः ।
अन्तर्जानु विशेषेण तद्वदाचमनं नृप ॥

1 'अध्वरेषु' इति विहितकर्ममात्रोपलक्षणम् (वी. मि., परि., ९२)

2 वी. मि. परि., ९३ ॥ "'उपहारो' बलिहरणम् । यद्वा—प्रसिद्ध एवोपहारो देवगुरुविषयः" (गोविन्दस्वामि-विवरणे).

3 वी. मि. परि., ९३.

'अन्तर्जानु' जानुनोर्मध्ये यथा बाहू भवतः तथा कर्तव्यमित्यर्थः ।

छन्दोगपरिशिष्टे कात्यायनः—[१, २, २; २, १, २–३]

हरिता यज्ञिया दर्भाः पीतकाः पञ्च यज्ञियाः[1] ।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः ॥
[[2]सव्ये पाणौ कुशान् कृत्वा कुर्यादाचमनक्रियाम् ।
[3]ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घास्तु बर्हिषः ॥
दर्भाः पवित्रमित्युक्तं अतः संध्यादिकर्मसु ।
[[2]सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः ॥]

'प्रचरणीयाः' 'प्रचरणं' अनुष्ठानं तत्साधनीभूताः तत्तदवस्थापन्नाश्चैतत्कार्यविशेषविनियुक्ताः । 'अतः' संध्यादिकर्मसु दर्भमात्रं पवित्रम् ।

तथा हि—[१, २, १०–१२]

अनन्तगर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥
एतदेव हि पिञ्जूल्या लक्षणं समुदाहृतम् ।
आज्यस्योत्पवनार्थे यत्तदप्येतावदेव तु ॥

1 'पञ्चयज्ञियाः' इत्यत्र पाकयज्ञिया इति क्वचित्पाठः । तत्र हरितादयो वक्ष्यमाणाः । 'कल्माषाः' चित्राः । (वी. मि. परि. ९३–९४).

2 [ ] omitted in *Kalpataru* and *Kṛtyaratnākara* (p. 65.) but found in वी. मि. परि., ९३–९४.

3 "यतो यज्ञादावेव हरितादिवर्णविशेषविधिः अतो यज्ञाद्यतिरिक्ते वर्णविशेषविध्यभावात् अनुष्ठानमात्रविहितं ह्रस्वदर्भमात्रं 'पवित्रं' शुचि इत्युक्तं मुनिभिः इत्यर्थः । न तु पवित्रलक्षणमेतत् । वक्ष्यमाणपवित्रलक्षणविरोधात् 'अत' इत्यनन्वयाच्च कल्पतरु-पारिजातादि-अनुसारिणो व्यवस्था" ॥ (वी. मि. परि., ९४.) इतरमतानि कृत्यरत्नाकरे (पृ. ६६), वीरमित्रोदये (परि., ९४–९५) द्रष्टव्यानि ॥

**एतत्प्रमाणमेवैके कौशीमेवार्द्रमञ्जरीम् ।**
**शुष्कां वा शीर्णकुसुमां पिञ्जूलीं परिचक्षते ॥**

**गृह्यपरिशिष्टे कात्यायनः**

**[दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः[1] ।]**
**अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥**

**[2]'अयातयामं' नवम् । एतेन कर्मार्हता लक्ष्यते ।**

**[मरीचिः[3]]**

**ये च पिण्डास्तृता दर्भा यैः कृतं पितृतर्पणम् ।**
**अमेध्याशुचिनिष्ठा ये तेषां त्यागो विधीयते ॥**

**मरीचिः**

**[4]मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।**
**अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥**

1 [ ] श्लोकस्य पूर्वार्धः मूलमातृकायां नास्ति । कृ. र., पृ. ६६, वीरमित्रोदये (परि., १००) च दृष्टः ॥ कर्मप्रदीपे, पृ. ३५ ।

2 'अयातमानि' अपरिभुक्तानि कृतकर्माण्यपि कर्मान्तरार्हाणि इति तात्पर्यम् (कृ. र., ६७) । 'यातायामं' जीर्णं तद् भिन्नं नवं तेन कर्मार्हता लक्ष्यते (वी. मि. परि., १००).

3 अयं श्लोकः मरीचेरिति कृ. र., पृ. ६७ सूचितः

4 'नभसि' श्रावणे । श्रावणश्चात्र मुख्यश्चान्द्रः । तथैव सर्वदेशे शिष्टाचारात् । एते संवत्सरपर्यन्तं अयातयामा इति वदन्ति । पठन्ति च—

सङ्ग्रहात् वत्सरं यावत् शुद्धिः स्यादिध्मबर्हिषाम् ।
ततः परं न गृह्णीयात् जपादौ यज्ञकर्मणि ॥

अन्ये तु—

चतुरो वार्षिकान् मासान् नाहरेत् कुशमृत्तिकाः ।
असंभवे त्वाददीत सद्यो यस्योपयोजनम् ॥

इति हलायुधधृतवाक्यात् श्रावणादिवर्षाकालसंबन्धिमासचतुष्टयातिरिक्तकाले कुशाहरणं प्रतीयते । मरीचिवचनात् श्रावणामावास्योत्पाटितकुशानां वर्षकालातिरिक्तकालोत्पाटितकुशानां च अयातयामत्वम् ॥ (वी. मि. परि., १०१.)

लघुहारीतः

चितिदर्भाः पथिदर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् ॥
पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम् ।
मूत्रोच्छिष्टैः कृता ये तु तेषां त्यागो विधीयते ॥

[केचत्तु[1]]

नीवीमध्ये तु ये दर्भाः ब्रह्मसूत्रे तु ये कृताः ।
पवित्रांस्तान्विजानीयात् यथा कायास्तथा कुशाः ॥

'नीवी' परिधानवस्त्रग्रन्थिः ।

[[2]लघुहारीतः]

आचम्य प्रयतो नित्यं पवित्रेण द्विजोत्तमः ।
नोच्छिष्टस्तु भवेत्तत्र भुक्तशेषं तु वर्जयेत् ॥
जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।
अशून्यं तु करं कुर्यात् सुवर्णरजतैः कुशैः ॥
दर्भहीना तु या संध्या यच्च दानं विनोदकम् ।
असंख्यातं तु यज्जप्तं तत्सर्वं निष्प्रयोजनम् ॥

छन्दोगपरिशिष्टे कात्यायनः—[१, ८, १७–१८]

नाङ्गुष्ठादधिका कार्या समित् स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥

1 'केचित्' इति चण्डेश्वरः (कृ. र., ६७)। मित्रमिश्रः लघुहारीतश्लोकैः योजितवान् (वी. मि.. परि., १०२.)

2 लघुहारीतः इत्यत्र सूचितः वीरमित्रोदये (परि. १०३).

प्रादेशान्नाधिका नोना न तथा स्याद्विशाखिका ।
न सपर्णा न निर्वीर्या होमेषु च विजानता ॥

'विशाखिका' विविधशाखायुक्ता ।

समिदिति अनुवृत्तौ[1] ब्रह्मपुराणे

[2]पालाशाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थोदुम्बरो बिल्वश्चन्दनः सरलस्तथा ॥
शालश्च देवदारुश्च खदिरश्चेति यज्ञियाः ।

'वैकङ्कतः' श्रुवावृक्षः ।

मरीचिः

प्रागग्राः समिधो देयास्ताश्च काम्येष्वपाटिताः ।
[3]काम्येषु च सशाकार्द्रा विपरीता जिघांसतः ॥
विशीर्णा विदला ह्रस्वा वक्रा ससुषिराः कृशाः ।
दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशकाः ॥

छन्दोगपरिशिष्टे कात्यायनः—(ii, p. 33)

[4]यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारि च ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥

'व्रीहीणां' षष्टिकानाम् ।

[तथा—१, ८, १६]

[5]आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।

1 वी. मि. परि., १०३.

2 "पलाशेत्याद्यर्धश्लोकेन समिध उक्ताः । अश्वत्थेत्यादिश्लोकेन यज्ञियवृक्षा उक्ताः ॥" (वी. मि., परि., १०४).

3 'शान्त्यर्थे तु ससल्कार्द्रा' इति वी. मि., परि. (१०४) पठति.

4 कृ. र., ७३.

5 कृ. र., ५९; वी. मि., परि., १०५.

मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥

'अनादेशे' अनभिधाने। मन्त्रस्य देवतायाश्च अनादेश इत्यनु॰॰ः। प्रजापनिर्देवता[यतः]समस्ता व्याहृतयश्च [प्राजापत्याः[1]।]

पैठीनसिः

काण्ड-मूल-पर्ण-पुष्प-फल-प्ररोह-रस-गन्धादीनां सादृश्येन प्रतिनिधिं कुर्यात्। सर्वाऽलाभे यवः प्रतिनिधिर्भवति।

'काण्डं' नालम्। 'प्ररोहः' 'अङ्कुरः[2]'।

मैत्रायणीयपरिशिष्टम्

दक्षिणाऽलाभे मूलानां [सर्वेषां] फलानां भक्ष्याणां वा दक्षिणां दद्यात्। न त्वेवं यजेत[3]।

तथा

दर्भास्तरणाभावे काशः प्रतिनिधिः तदलाभे पर्ववतीभिः ॰ाण्डवतोभिरोषधीभिः स्तरणार्थान् कुर्वन्तीति। कटोशीरशुण्ठनलबल्वजपलालोलपवर्जम्[4]।

'पर्ववतीभिः' ग्रन्थिमतीभिः। कटादयस्तृणावे॰ोषाः।

1 "इति पारिजातप्रभृतयः। अत्र देवतान्तरादेशे मन्त्रानादेशे च प्राजापत्यमन्त्रविधाने मन्त्रवर्णविरोधः। अन्यदैवत्यमन्त्रादेशे देवतायाश्चानादेशे प्रजापतिदेवताविधानेऽपि मन्त्रवर्णविरोधः"॥ एतत् परिशिष्टभाष्य-भाट्टमतमिति मित्रमिश्रः (वी. मि., परि., १०६).

2 वी. मि., परि., १०९; कृ. र., ७३.

3 'न त्वेवं यजेत' दक्षिणां विना न यजेत इत्यर्थः (वी. मि. परि., १०९).

4 कृ. र., ७४—'कटो-शीर-चूष-नलबल्वज-नीप-धववर्जम्' इति पठति।

अथ इध्मार्थे पालाशाऽश्वत्थ-खदिर-रोहितक-औदुम्बराणां, तदलाभे सर्ववनस्पतीनां, तिल्वक-धव-नीप-निम्ब-राजवृक्ष-शाल्मल्यबन्ध-कपित्थ-कोविदार-विभीतक-श्लेष्मातक-सर्वकण्टकिवर्जम्।

'[1]तिल्वकः' 'चिल्लक' इति प्रसिद्धः। 'नीपः' कदम्बः। 'राजवृक्षः' किरवाल इति प्रसिद्धः। 'श्लेष्मातकः' बहुवारकः।'

व्रीहियवौ पुरोडाशार्थे। तदलाभे तुषवतीभिस्तण्डुलवतीभिरोषधीभिः पुरोडाशान् कुर्वन्ति। [2]अणु-चीन-कल्माषक-कुरवक-माष-मसूर-कोद्रव-कोरदूषकवर्जम्।

'पुरोडाशान्' पुरोडाशार्थान्। 'अणवः' मर्कटकाः। 'कुरवकः' पीतकुलत्थकः। 'कोरदूषकः' वनकोद्रवः[3]।

घृतमाज्यार्थे प्रतिनिधिस्तदलाभे दधि पयो वा। तण्डुलपिष्टानि यवपिष्टानि वाऽद्भिः संसृष्टानि[आज्यार्था]न् कुर्वन्ति।

वायुपुराणे

कण्डनं पेषणं चैव तथैवोल्लेखनं सदा।
सकृदेव पितृणां स्याद्देवानां च त्रिरुच्यते॥

1 कृ. र., ७४, 'चिल्लक', 'तिलकस्थान' पठति। ''चिल्लकं' चिन्दुक इति प्रसिद्धः' इति। 'तिलकः' लोध्रः (वी. मि., ११०)। ''राजवृक्षः आरग्वध इति प्रसिद्धः; अयमेव कान्यकुब्जे किरवाल इति ख्यातः' (कृ. र., ७४).

2 'अणु-चीन-कल्माष-मसूर-वरक' इति वी. मि. पठति। 'अनु, चानक-कुरक-माष-मसूर-कोद्रव' इति कृ. र. पाठः।

3 'माष' शब्दो ऽत्र कृष्णेतरमाषपरः इति कृ. र. (पृ. ७५).

'[1]उल्लेखनं' स्वपराङ्मुखत्वेन रेखाकरणम्।

यज्ञपार्श्वः

पित्र्यर्थं निर्वपेद्भूमौ सूर्ये वा दर्भसंयुते॥

यज्ञपार्श्वः

गर्भाधानादि सर्वेषु ब्राह्मणान् भोजयेद्दश।
आवसथ्ये त्रयोविंशत्यग्न्याधेये दशात्परम्॥
आग्रयणे प्रायश्चित्ते ब्राह्मणान् दश पञ्च च।
सहस्रं भोजयेत्सोमे ब्राह्मणानां शतं पशौ॥
चातुर्मास्ये तु चत्वारि तथा पञ्च सुराग्रहे।
अयुतं वाजपेये तु अश्वमेधे चतुर्गुणम्[2]॥

चत्वारि शतानीति संबन्धः।

छन्दोगपरिशिष्टे कात्यायनः—[१, ९, ११-१५]

पाण्याहुतिर्द्वादशपर्वपूरिका
कंसादिना चेत् स्रुवपूरमात्रिका।
दैवेन तीर्थेन च हूयते हविः
स्वङ्गारिणि स्वर्चिषि तच्च पावके॥
योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः।
[3]मन्दाग्निरामयावी च दरिद्रश्चोपजायते॥

1 'उल्लेखनं स्वात्मपराङ्मुखत्वेन रेखाकरणम्' इति कल्पतरुः इति वीरमित्रोदय-परिभाषाप्रकाशे (पृ. १११). कल्पतरुमूलमातृकायां एतद्व्याख्यानमेवं दृष्टम्।

2 'आग्रयणं' नवसस्येष्टिः। चत्वारि पञ्चेति अत्र शतानि इति विभक्तिविपरिणामेनान्वयः। 'सुराग्रहे' सौत्रामण्याम्।

3 वी. मि., परि., ११४.—'आमयावी, दीर्घरोगी। 'स्फ्यः' खड्गाकारो यज्ञपात्रविशेषः। आदिपदं वज्रादिपरिग्रहार्थम्।

तस्मात्समिद्धे होतव्यं नाऽसमिद्धे कदाचन ।

'व्यङ्गारिणि' विगताङ्गारे ।

आरोग्यमिच्छता ऽऽयुश्च श्रियमात्यन्तिकीं तथा ॥
जुहूषंश्च हुते चैव पाणिशूर्पस्फ्यदारुभिः ।
न कुर्यादग्निधमनं न कुर्याद्व्यजनादिना ॥
मुखेनैव धमेदग्निं मुखाद्ध्येषो ऽध्यजायत ।
नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत् ॥

'जुहूषन्' होतुमिच्छन् ।

॥ ३ ॥

# अथ संस्कारः

अत्र मनुः—[२, २६]

वैदिकैः कर्मभिः पुण्यैः निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च[1] ॥

'वैदिकैः' विहिताभिमर्शनादिभिः । 'पुण्यैः' अतिशयजनकैः । 'शरीरसंस्कारः' शरीरशब्दोऽत्र अजहत् स्वार्थलक्षणया तत्कारणेऽपि वर्तते । 'पावनः' पापनिबर्हणः ।

याज्ञवल्क्यः—[१, १०]

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रिया ॥

द्विर्जायत इति 'द्विजः' । द्वितीयं जन्म उपनयनम् । 'श्मशानान्ताः' तत्संबन्धि कर्म च ।

[illegible]संस्कारानुवृत्तौ यमः[2]

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः ।
न केनचित् समसृजत् छन्दसा तं प्रजापतिः ॥

1 मूलमातृकायां मनुश्लोको नष्टः । वी. मि. संस्का. १३३ वर्तते ।
2 वी. मि. संस्का., १३३.

'विना मन्त्रेणे'त्यत्र हेतुः 'न केनचिदि'त्यादिः। 'छन्दसा' वेदेन। 'समसृजत्' संबन्धं जनितवान्।

ब्रह्मपुराणे

विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदा[1]।

'विवाहमात्रं' इत्यनेन प्राप्तः विवाहविधिः। 'मात्र' शब्दस्तु विहितेतरसंस्कारनिवृत्त्यर्थः। अमन्त्रास्तु अविद्यत्वादेवतेज्यानिवृत्तयः।

याज्ञवल्क्यः—[१, १३]

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः[2]।

अङ्गिराः

[3]चित्रकर्म यथाऽनेकैः अङ्गैरुन्मील्यते शनैः।
ब्राह्मण्यमपि तद्वत्स्यात् संस्कारैर्विधिपूर्वकैः॥

मनुः—[२, २७]

गार्भैर्होमैः जातकर्मचौडमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते[4]॥

1 अपरार्के (पृ. २४)—"मात्रशब्दात् मन्त्राणां व्यावृत्तिः पूर्वसंस्काराणां वा। तथा च विकल्पः विहितत्वात् इतरेषाम्।"

2 "एता हि जातकर्माद्याः क्रियाः स्त्रीणां अमन्त्रकाः। विवाहः पुनस्समन्त्रकः। गृह्यविहितानां संस्काराणामिह परामर्शात्तत्र च तदङ्गानामपि उपदेशात् साङ्गानां तूष्णीभावो वेदितव्यः।" (अपरार्के, पृ. ३०).

3 मूलमातृकायां अङ्गिरःश्लोकः दूषितो दृश्यते। वी. मि. संस्कारप्रकाशे स्पष्टः। तत उद्धृतः (पृ. १३६).

4 "ये गर्भशुद्धये क्रियन्ते ते 'गार्भाः'। होमग्रहणमुपलक्षणं, गर्भाधानादेः अहोमरूपत्वात्। जातस्य यत्कर्म मन्त्रवत्सर्पिःप्राशनादिरूपं तत 'जातकर्म'। 'चौडं' चूडाकरणकर्म। 'मौञ्जीबन्धनं' उपनयनम्। एतैः 'बैजिकं' प्रतिषिद्धमैथुनसंकल्पादिना च पैतृकरेतोदोषादि यत्पापं 'गार्भिकं' च अशुद्धि मातृगर्भावसजं तद्द्विजातीनां अपमृज्यते"। (कुल्लूकः).

'बैजिकं' शुक्रभवम्। 'गार्भिकं' गर्भाशयः श्रोणी तद्भवम्। 'एनः' अशुचित्वम्।

हारीतः

गर्भाधानवदुपेतो ब्रह्मगर्भं संदधाति। पुंसवनात् पुंसीकरोति। फलस्नपनात् मातापितृजं पापमपोहति। ब्राह्मण्यरेतोत्थगर्भोपघातः पञ्चगुणः। जातकर्मणा प्रथममपोहति। नामकरणेन द्वितीयम्। प्राशनेन तृतीयम्। चूडाकरणेन चतुर्थम्। स्नानेन पञ्चमम्। व्रतैरष्टभिर्गर्भसंस्कारैः गर्भोपघातात्पूतो भवति। उपनयनादिभिरष्टाभिरन्तर्व्रतैः चाऽष्टाभिः। स्वच्छन्दसंमिता ब्राह्मणाः परं पात्रं देवपितॄणां भवन्ति। छन्दसां वायतनम्।

'गर्भाधानवत्' गर्भाधानविधिना 'विष्णुर्योनिं कल्पयतु' इत्यादिना। 'उपेतः' स्त्रियमुपगतः। 'ब्रह्मगर्भं संदधातीति' ब्रह्म वेदस्तद्ग्रहणयोग्यं गर्भं संदधाति सञ्जनयति। 'पुंसीकरोति' अव्यक्तलिङ्गगर्भं पुमांसं करोति। 'पुमांसं पुत्रं विदन्व' इति मन्त्रवर्णात्। 'फलस्नपनात्' फलस्नपनाङ्कसीमन्तोन्नयनात्। 'मातापितृजं' मातापितृद्वारा जातम्। गर्भस्थस्य आश्रयस्थस्य आश्रयसंस्कारद्वारा अपत्यसंस्कारः। 'उपघातः' पापसङ्गः। 'पञ्चगुणः' पञ्चप्रकारः। उपपातकजातिभ्रंशकरसंकरणापात्रीकरणमलिनीकरणरूपपापपञ्चकसंक्रान्तेति जयस्वामी। स्नानं चात्र समावर्तनम्। अष्टौ व्रतचर्याः उपनयनादि मेखलेत्यादि उर्ध्वरेता इत्यत्र वक्ष्यमाणाः। 'अन्तर्व्रतानि' सावित्रीगोदानकाऽऽदित्यव्रतौपनिषदष्टकामासिकमहानाम्नीमहाव्रतिकानि। 'स्वच्छन्दःसंमिताः' स्ववेदयुक्ताः।

[1]सुमन्तुः

ब्राह्मणक्षत्रियवैश्यानां गर्भाधान-सीमन्तोन्नयन-जातकर्म-नामकरण-अन्नप्राशन-चूडोपनयन-व्रतचर्या अध्ययन-समावर्तन-विवाह-यज्ञादीनि समानानि ।

[2]गौतमः—[८, १३-१९]

गर्भाधान[पुंसवन]सीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनं, चत्वारि वेदव्रतानि, स्नानं, सहधर्मचारिणीसंयोगः, पञ्चानां यज्ञानां अनुष्ठानं, देवपितृमनुष्यभूतब्रह्मणामेतेषां च । अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति पाकयज्ञसंस्थाः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः । [अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रो ऽप्तोर्याम इति सप्त सोमसंस्थाः ।] इत्येते चत्वारिंशत् संस्काराः[3] ।

'चत्वारि वेदव्रतानि' प्रतिवेदं आम्नातानि । 'स्नानम्' समावर्तनम् । 'सहधर्मचारिणीसंयोगो' विवाहः । 'एतेषां चेति' वक्ष्यमाणानामष्टकादीनामिति सम्बन्धः[4] ।

1 मूलमातृकायामस्फुटः । वी. मि., सं., १३४.

2 Telescoped in MS. in a confused way with previous passage from *Sumantu*, and the name Gautama omitted. Restored from वी. मि. सं., १३७ and printed text of Gautama. The sentence in brackets is missing in the MS.

3 The enunciation of अष्टगुणाः probably followed this as in *Gautama*:—अथाष्टवात्मगुणाः । दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति ॥ (८, २०-२१).

4 पञ्चानां देवादीनां यज्ञमनुष्ठानम् । तच्च अहरहः कर्तव्यम्, न तु सकृत्कृतेन संस्कारसिद्धिः । एते च पञ्चसंस्काराः न पुनः समुदिता एकः संस्कार इति । 'अष्टकाः' स्वस्वगृह्योक्ताः । पर्वणि भवः 'पार्वणः', स्थालीपाकः । 'श्राद्धं' मासि मासि अमावास्यायां

हारीतः

द्विविध एव संस्कारो भवति ब्राह्मो दैवश्च। गर्भाधानादिः [1]स्नानान्तो ब्राह्मः। पाकयज्ञा हविर्यज्ञा सौम्याश्चेति दैवः[2]।

ब्राह्मसंस्कारसंस्कृतः ऋषीणां समानतां सलोकतां सायोज्यतां च गच्छति। दैवेनोत्तरेण संस्कृतो देवानां समानतां सलोकतां सायोज्यतां च गच्छति।

'सौम्याः' सोमयागा अग्निष्टोमादयः। 'समानता' समानो यः तेन तुल्यतोक्ता। 'सायोज्यता', समानमायोज्यं शरीरं यस्य सः सायोज्यः।

मनुः—[२, २८]

[3]स्वाध्यायेन व्रतैर्होमैः त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥

'स्वाध्यायेन' वेदग्रहणेन। 'व्रतैः' सावित्र्यादिभिः। 'त्रैविद्येन'त्रय्यर्थज्ञानेन। 'इज्यया' देवादिपूजनेन। 'ब्राह्मी' ब्रह्मसंबन्धिनी तद्ज्ञानद्वारा।

क्रियमाणम्। 'श्रावणी' सर्पबल्याख्यं श्रावणीकर्माख्यं च कर्म। 'आग्रहायणी' प्रत्यवरोहणख्यं कर्म। 'चैत्री' शूलगवाख्यं कर्म। 'आश्वयुजी' रुद्रायस इति छन्दोगाः। आश्वयुज्याख्यं कर्म इत्याश्वलायनाः। (वी. मि. संस्का., पृ. १३८). इत्थं स्मृतिचन्द्रिकायां (संस्कार, पृ. ३२.)—'वेदव्रतानि' प्राजापत्यादीनि। 'पञ्चयज्ञाः' देवयज्ञादयः। 'अष्टका' श्राद्धविशेषः। 'चैत्री' होलकाख्यकर्म। 'आश्वयुजी' इन्द्रध्वजहोमाख्यम्।

1 'स्मार्तो ब्राह्मः' इति मित्रमिश्रधृतपाठः। तेनैव कल्पतरुपाठश्च सूचितः (पृ. १३५)। स्मृतिचन्द्रिका, संस्कारकाण्ड, पृ. ३४।

2 'सौम्याः' सोमयागा अग्निष्टोमादयः। ते च ब्राह्माः षोडश। (वी. मि. सं., १३५).

3 मानवश्लोकः मूलमातृकायां नष्टः.

शङ्खलिखितौ

पाकयज्ञा हविर्यज्ञाः सोमसंस्थास्तथैव च ।
[संस्कारा ह्यग्निहोत्रान्ता अग्नि]होत्रं तु जुह्वतः[1] ॥
संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः ।
नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्राह्मलौकिकः ॥
ब्राह्मं पदमवाप्नोति यस्मान्न च्यवते पुनः ।
नाकपृष्ठं यशो धर्मं त्रिरीजानस्त्रिपिष्टपम् ॥

अग्निहोत्रिणः दर्शपूर्णमासं विनाऽपि अग्निहोत्रानुष्ठानं विहितमस्ति तस्याग्निहोत्रपर्यन्ताः[संस्काराः] । जातकर्म 'पूर्वैः' गर्भाधानादिभिः, 'उत्तरै'रग्न्याधेयादिभिः । 'अष्टगुणै'र्दयादिभिः । 'ब्राह्मलौकिकः' ब्रह्मलोकार्हः । 'नाकपृष्ठं' [मेरुपृष्ठम्] । 'त्रिविष्टपं' देवलोकः । 'त्रिरीजानः' पाकयज्ञ-हविः-सोमसंस्थाभिः । त्रिः सोमयागेनेष्टवान् इति माधवस्वामी[2] ।

बुधः

गर्भाधानं पुंसवनं सीमन्तोन्नयनं सूतिकागृहसंस्कारः सोष्यन्तीकर्म ।

'सोष्यन्तीकर्म' शीघ्रप्रसवाय गोभिलाद्युक्तम्[3] ।

याज्ञवल्क्यः—[१, ११-१२]

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा ।
षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च ॥

1 [ ] Missing in MS. वी. मि., सं., १४०.
2 Text corrupt; corrected. वी. मि., सं., १४०.
3 वी. मि., सं., १३९.

**अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।**
**षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ॥**

**'एते' आ इते आगते, कुमारे जाते, इत्यर्थः[1] ।**

**गोभिलगृह्ये—[२, ५, ८-१०]**

**यदर्तुमती भवत्युपरतशोणिता तदा सम्भवकालः । दक्षिणेन पाणिनोपस्थमभिमृशेद्विष्णुर्योनिं कल्पयत्वित्येतयर्चा गर्भं धेहि शिनीवालीति समाप्यर्चौ सम्भवतः ।**

**ऋचौ समाप्य संयोगं कुरुतः[2] ।**

**बौधायनः—[२, १६, ११-१२]**

**प्रजामुत्पादयेत् । औषधमन्त्रयोगेन[3] ।**

1 एते च पुंसवन-सीमन्तोन्नयने क्षेत्रसंस्कारकर्मत्वात् सकृदेव कार्ये, न प्रतिगर्भम् । यथाह देवलः—

सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता ।
यं यं गर्भं प्रसूयेत स सर्वः संस्कृतो भवेत् ॥

यद्वा 'एते' आ इते आगते गर्भकोशाज्जाते कुमारे, जातकर्म । (इति **मिताक्षरा**). परन्तु "सीमन्तोन्नयनं प्रथमगर्भेऽभिधत्ते । पुंसवनस्तु प्रतिगर्भमावर्तेत" इति **अपरार्कः** । तस्य मतं मित्रमिश्रैश्च स्वीकृतं इत्थं स्फष्टीकृतञ्च—

पुंसवन-अनवलोभने गर्भसंस्कारत्वात् प्रतिगर्भमावर्तनीये—

प्रतिगर्भमिदं कर्म कार्यं पुत्रीयताऽखिलम् ।
प्राशनस्पर्शकरणाद्गर्भस्थः संस्कृतो भवेत् ॥
पुंसवे मन्त्रसामर्थ्यात् वेत्ति प्राग्जन्मनः स्मृतिम् ।
तस्मात् पुंसवसंस्कारः प्रतिगर्भं प्रवर्तते ॥

इति शौनकस्मरणात् ।" (वी. मि. संस्का., १७१).

2 **संस्कारतत्व**, पृ. ९०७; ९०९. ऋतुर्नाम गर्भधारणयोग्यावस्थोपलक्षितः कालविशेषः । स च शोणितनिःसरणादारभ्य षोडशाहोरात्रात्मकः ।

3 'तस्मायत्नवान् प्रजामुत्पादयेत्' इसि मुद्रितबौधायनधर्मसूत्रे (पृ. २००).

पारस्करः—[१, १३, १]

सा यदि गर्भं न दधीत सिंह्याः श्वेतपुष्पायाः उपोष्य पुष्येण मूलमुत्खाय[1] चतुर्थ्यां[2] स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चतीयमोषधी त्राय-माणेत्यादिना[3]।

'सिंही' कण्टकारिका। उपवासमूलखननयोः पत्युः कर्तृत्वम्।

बैज॰ापः

सा यदि नादधीत सिंह्याः श्वेतपुष्पाया उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थ्यां स्नातायां निशि प्राजापत्यं स्थालीपाकं श्रपयित्वा प्रजापतये हुत्वा पश्चादग्नेर्वीर-शयने प्राचीमुत्तानां संवेश्य चत्वाभ्यामोषधीमुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायां नस्तः कुर्यात् 'इयमोषधी त्राय-माणा' इति।

'वीरं शयनं' अनन्तर्हिता भूमिः। 'संवेश्य' शाय-यित्वा। 'चत्वाभ्यां' दृषदुपलाभ्याम्। 'नस्तः' नासि-कारन्ध्रे।

1 मुत्थाप्य.

2 चतुर्थेऽहनि.

3 इयमोषधी त्रायमाणा सहमाना सरस्वती।
अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जग्रभम्॥

मन्त्रार्थः—इयं त्रायमाणा यथोक्तं प्रयुक्ता रक्षन्ती सहमाना दोषवेगान् सोढ्वाऽपि नाशयन्तीत्यर्थः। सरस्वती कारणतया गच्छतीति सरः समुद्रः तद्वती तत्संबद्धा वा। अतः अस्याः बृहत्याः बृंहति पुत्रादिदानेन तस्याः प्रभावात् चाहं पुत्रः पितुरिव प्रत्यहं नाम जग्रभं गृह्णीयां लभेयं प्राप्नुयामि्। (संस्कारगणपति, ३८८; गदाधरभाष्य, २३२).

# [1]अथ गर्भानवलोभनम्

<u>आश्वलायनगृह्यपरिशिष्टम्</u>

अखण्डाकपिलं पेषयित्वा ऋतुवेलायां उदीष्वातः पतिवतीति द्वाभ्यामन्ते स्वाहाकाराभ्यां नस्तो दक्षिणतो निषिञ्चेत्।

'अखण्डाकपिलः' कृच्छ्रुः।

# अथ पुंसवनाऽनवलोभनम्

<u>तत्राश्वलायनगृह्यम्</u>—[१, १३, १–७]

उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं च। यदि नाऽऽधीयात् तृतीये गर्भमासे तिष्येणोपोषितायाः सरूपवत्सायाः गोर्दधनि द्वौ द्वौ तु माषौ यवं च दधि प्रसृतेन प्राशयेत्[2]। किं पिबसि किं पिबसीति पृष्ट्वा पुंसवनं पुंसवनमिति त्रिः प्रतिजानीयात्। एवं त्रीन् प्रसृतान्। अथास्यै मण्डलागारच्छायायां दक्षिणस्यां नासिकायां अजीतामोषधीं नस्तः करोति। प्रजावज्जीवपुत्राभ्यां हैके। [आ ते गर्भो योनिमैतु पुमान् बाण इवेषुधिम्। आवीरो जायतां पुत्रस्ते दशमास्यः। अग्निरैतु प्रथमो देवानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्। तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदादिति।] प्राजापत्यस्य स्थाली-

1 "सीमन्तोन्नयनं प्रथमगर्भेऽभिधत्ते। पुंसवनस्तु प्रतिगर्भं आवर्तेत।" (अपरार्कः, पृ. २५).

2 माषद्वयं यवं च त्रिः पृच्छेत् किं पिबसीति ताम्। त्रिः पुंसवनमित्युक्त्वा प्राश्यैवं प्रसृतद्वयम्। अण्डरूपेण माषौ स्तः शिश्नरूपेण वै यवः। इति भट्टकुमारिलप्रणीत आश्वलायनगृह्यकारिका (का. १०८).

पाकस्य हुत्वा हृ[illegible]स्या आलभेत । यत्ते सुसीमे हृदये हितमन्तः प्रजापतौ । मन्येऽहं मां तद्विद्वांसं माहं पौत्रमघं नियामिति[1] ।

'उपनिषदि' उपनिषत्संज्ञके वेदभागे । 'गर्भलम्भनं पुंसवनमनवलोभनं' आम्नातमिति शेषः । पुमान् सूयते अनेन कर्मणेति 'पुंसवनम्' । 'अनवलोभनं' अनवलोपनं रक्षणमिति यावत् । 'यदा नाऽधीयात्' पठेदुपनिषदस्तदा तिष्येणेत्यादिकर्म कर्तव्यमित्यर्थः । 'अथास्यै' इत्यस्याः अनवलोभनकर्म । अस्यै इति षष्ठ्यर्थे चतुर्थी छान्दसत्वात् । 'मण्डलागारच्छाया' मण्डलाकृतिगृहच्छाया । 'अजीता' श्वेतदूर्वा । 'आ ते गर्भ' इत्यादि प्रजावान् मन्त्रः । 'अग्निरैतु प्रथम' इत्यादि जीवपुत्रमन्त्रः ।

आश्वलायनगृह्यपरिशिष्टे उक्तम्

तृतीये मासि पुंसवनं चतुर्थे गर्भरक्षणम् ।

सांख्यायनगृह्यम् [१, २०, १–२]

तृतीये मासि पुंसवनं, तिष्येण श्रवणेन वा[2] ॥

तथा [१, २१, १]

चतुर्थे गर्भरक्षणम् ।

बैजवापगृह्यम्

तत्र पुंसवनानवलोभने करोति मासि द्वितीये वा, पुरा स्पन्दत इत्यापूर्यमाणपक्षे पुण्याहे यदहः पुंसा नक्षत्रेण चन्द्रमा युज्येत ।

1 अपरार्के, पृ. २५–२६.

2 अपरार्के, पृ. २६.

# अथ सीमन्तोन्नयनम्

तत्र शङ्खलिखितौ

गर्भस्पन्दने सीमन्तोन्नयनं यावद्वा न प्रसवः।

बैजवापगृह्यम्

अथ सीमन्तोन्नयनं मासि चतुर्थे पञ्चमे [षष्ठे[1]] वा। [आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तस्स्यात्[2]।]

अथाऽऽश्वलायनगृह्यम्—[१, १४, १–२]

चतुर्थे गर्भमासे सीमन्तोन्नयनम्। आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्।

पारस्करः—[१, १५, १–३]

अथ सीमन्तोन्नयनं पुंसवनवत् प्रथमे गर्भे, मासे षष्ठेऽष्टमे वा।

शाङ्खायनगृह्यम्—[१, २२, १, ६]

सप्तमे मासि प्रथमे गर्भे सीमन्तोन्नयनम्। तथा पुंवदुपकरणानि नक्षत्रं वा पुंवदिति पुंसवनम्।

'उपकरणानि' इतिकर्तव्यता।

आश्वलायनगृह्यपरिशिष्टम्

सीमन्तोन्नयनं प्रथमे गर्भे। 'सीमन्तोन्नयनसंस्कारो गार्भपात्रसंस्कार' इति श्रुतिः

1 'षष्ठे वापि' इति अधिकं स्मृतिचन्द्रिकायां (संस्का. ४४) दृश्यते.

2 तथा अपरार्के, २५.

गर्भपात्रयोरयं गार्भपात्रः। गर्भस्थस्योदरगतस्य तदाधारस्य च पात्रस्य क्रिया इत्यर्थः।

हारीतः

सकृत् संस्कृतसंस्कारा सीमन्तेन द्विजस्त्रियः।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्[1] ॥

देवलः

सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता[1]

## अथ सोष्यन्तीकर्म

तत्र गोभिलगृह्ये—[१, ७, १३-१४]

अथ सोष्यन्तीहोमः। प्रतिष्ठिते वस्तौ[2][परिस्तीर्याग्निमाज्याहुती जुहोति, 'या तिरश्ची' इत्येतयार्चा 'विपश्चित्पुच्छमभरत्' इति च]।

'प्रतिष्ठिते वस्तौ' वस्तिदेशं प्राप्ते। तत्र स्थिते गर्भे सोष्यन्तीहोमः कर्तव्यः।

तत्र सोमः

सूतिकागृहसंस्कारप्रसवान्तं कर्म जातकर्म गुह्यनामकरणम्।

अयमर्थः। सूतिकागृहसंस्कारं कृत्वा प्रसवस्यान्तभूतं जातकर्म कार्यमिति। अन्तशब्देनात्रान्तसंबन्धिकर्म लक्ष्यते।

1 अपरार्के, पृ. २५। "केचित् सीमन्तोन्नयनं गर्भसंस्कार इति प्रतिगर्भमावर्तयन्ति। तथा च विष्णुः

सीमन्तोन्नयनं कर्म तत्स्त्रीसंस्कार इष्यते।
केचिच्च गर्भसंस्कारात् गर्भे गर्भे प्रयुञ्जते।"

इति स्मृतिचन्द्रिका (संस्का. १. ४५)। 'अनयोः पक्षयोः यथागृह्यं व्यवस्था' इति माधवाचार्यः (I, ii, p. 22) कात्यायनानां तु प्रतिगर्भं आवर्तनीयं इति धर्मसिन्धुः।

2 'बस्तिः' योनिद्वारम् (वी. मि., सं., १८७; संस्कारतत्त्व, पृ. ९१५).

सांख्यायनगृह्यम् [१, २३, १]

काकादन्या मेचकरातन्याः कोशातक्याः बृहत्याः काकातकस्य मूलानि पेषयित्वा उपलेपयेत् देशं यस्मिन् जायेत रक्षसामपहत्यै ।

'काकादनी' अत्र काकजङ्घा । 'मेचकरातनी' काकमाचिका । 'कोशातकी' घोषकः । ['बृहिती' कण्टकारिका । 'काकातकः' कृष्णगुञ्जा[1] । ]

मार्कण्डेयपुराणे[2]

अग्न्यम्बुशून्ये च तथा निर्यूपे सूतिकागृहे ।
अदीपशस्त्रमुसले भूतिसर्षपवर्जिते ॥
अनुप्रविश्य या जातमपहृत्यात्मसंभवम् ।
क्षणप्रसविनी बालं तत्रैवोत्सृजते द्विज ॥
सा जातहारिणी नाम सुघोरा पिशिताशना ।
तस्मात्संरक्षणं कार्यं यत्नतः सूतिकागृहे ॥

यूपोऽत्र [यूपाकार]काष्ठविशेषः ।

## [अथ जातकर्म]

[3]हारीतः

जाते कुमारे पितॄणामामोदात् पुण्यं तदहस्तस्मात्तिलपूर्णानि पात्राणि सहिरण्यानि ब्राह्मणानाहूय पितृभ्यः

1 [ ]==restored from वी. मि., सं., १८५.

2 वी. मि., सं., १८६.

3 वी. मि., सं., १९२ ; अपरार्के, २६ । "जातकर्म नाभिवर्धनात् प्रागेव कार्यम् । न चाशौचशङ्कया कर्मानधिकारः इति वाच्यम् । नाभिच्छेदात्प्रागाशौचाभावात् । तदाह जैमिनिः—

यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात् सूतकं तु विधीयते ॥" (पराशरमाधवीये—२, १५).

स्वधा कुर्यात् प्राजापतये चेति। प्राङ्नाभिच्छेदनात् सं स्कारपुण्यार्थान् कुर्वन्ति [छिन्नायामशौचम्।]

'जातकर्मणि बालानाम्' इत्यादिवचनाविहिते वृद्धिश्राद्धे हिरण्यपात्रद्रव्यविधिः। स्वधाशब्देन श्राद्धोपस्थानात्। प्राजापतये सहिरण्यं तिलपात्रं त्यजेत्। 'संस्कारो'जातकर्म। 'पुण्यार्थान्' पुण्यप्रयोजनान् दानादीन्।

[1]ब्रह्मपुराणे

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्।
आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा॥
तत्र दद्यात् सुवर्णं च भूमिं गां तुरगं तथा।
छत्रं छागं च माल्यं च शयनं चासनं गृहम्॥
जाते श्राद्धे न दद्याच्च पक्कान्नं ब्राह्मणेष्वपि।

बैजवापः

जाते कुमारेऽरणिभ्यामग्निं मथित्वा तस्मिन्नायुष्यहोमान् जुहोति। तस्मिंश्चूडाकरणोपनयनव्रतादेशगोदानक्रियाः। तस्मिन्नेतमुद्वाहयेयुः।

'तस्मिन्' शालाग्नौ।

मनुः[2]

प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते।
मन्त्रवत् प्राशनं चास्य हिरण्यमधुसर्पिषाम्॥

'वर्धनं' छेदनम्।

1 वी. मि., सं., १९९.
2 मनु, २, २९.

[1]शङ्खलिखितौ

प्रसूते जातकर्म यवपिष्टमधुसर्पिर्भिर्मन्त्रवत् प्राशनम्। तस्य सुवर्णान्तर्हितयाऽनामिकया मेधाधिकं ब्राह्मणस्य करोति। एवमितरयोः।

'मेधाधिकं' मेधाजननम्। 'इतरयोः' क्षत्रियवैश्ययोः। 'अनामिका' कनीनिकासमीपाङ्गुलिः।

[1]आश्वलायनगृह्यम्

कुमारं जातं पुराऽन्यैरालम्भात् सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत्।

'पुराऽन्यैरालम्भात्' 'पुरा' पूर्वं 'अन्यैः' [उपसूतिकेतरैः] 'आलम्भात्' स्पर्शात्।

[2]बैजवापगृह्यम्

अत्र जातस्य कुमारस्याऽछिन्नायां नाड्यां हिरण्यमिश्राभिरद्भिराचामयेत् नानामन्त्रैर्हिरण्येन दधिमधुघृतं प्राशयति 'भूस्त्वयि दधामि' इति।

[3]पारस्करः [१, १६, ३–४]

जातस्य कुमारस्याऽछिन्नायां नाड्यां मेधाजननायुष्ये करोति। अनामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं वा, 'भूस्त्वयि दधामि' इत्यादि।

'आयुष्यं अग्निरायुष्मान्' इत्यादि जपः।

1 वी. मि., सं., १९३.
2 वी. मि., सं, १९३.
3 वी. मि., सं, १९४.

वैजवापगृह्ये

अथास्य मेधाजननं करोति। दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथास्य गुह्यं नाम करोति।

'अभिनिधाय' अभिमुखीभूय। 'गुह्यं' मातापितृ-भ्रातृवेद्यम्।

[1]अङ्गिराः

सूतिकावासनिलया जन्मदा नाम देवताः।
तासां यागनिमित्तार्थं शुद्धिर्जन्मनि कीर्तिता॥
षष्ठेऽह्नि रात्रियागं तु जन्मदानां तु कारयेत्।

## अथ नामकरणम्

अत्र मनुः—[२, ३०]

नामधेयं दशम्यां तु द्वादश्यां वाऽस्य कारयेत्।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते॥

'दशम्यामि'त्येतच्च येषां दशाहात् प्राक् शुद्धिस्तेषाम्। 'पुण्ये तिथौ' न रिक्तायाम्। 'मुहूर्ते गुणान्विते' अभिजिदादौ।

भविष्यपुराणे

नामधेयं दशाभ्यां तु केचिदिच्छन्ति पार्थिव।
द्वादश्यामथवा रात्रौ मासे पूर्णे तथाऽपरे॥
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते॥

1 First two lines are cited as Vyāsa's in *Nirṇayasindhu*, p. 182. (ed. Nirṇayasāgara.) They come under षष्ठीपूजनम्.

याज्ञवल्क्य-बृहस्पती—[याज्ञ, १, १२; बृह., सं. ५८]

अहन्येकादशे नाम ।

विष्णुः—[२७, ५]

आशौचव्यपगमे नामधेयम् ॥

एतेन दशम्यामिति निवृत्ताशौचविषयम् ।

गोभिलः[1]—२, ८, ८).

जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामधेय-करणम् ।

'व्युष्टे' अतिक्रान्ते ।

[2]शङ्खलिखितौ

दशम्यामुत्थाप्य पिण्डवर्धनं पितृणां तत्र सांनिध्य-श्रुतेः । ब्रह्मणे चाहुतिं पूर्वं हुत्वा पितॄन् अनुमान्य तदहरेव नामकरणं [कुर्यात्] । कुलदेवतानक्षत्राभिसम्बद्धं पिता कुर्यादन्यो वा कुलवृद्धः[3] । चतुरक्षरं द्व्यक्षरं वा घोषवदाद्य-न्तरन्तस्थं पुंसां, ईकारान्तं स्त्रीणामेव कृते नाम्नि, शुचि तत्कुलं भवति ।

'उत्थाप्य' सूतिकामिति शेषः । 'पिण्डवर्धनं' श्राद्धं कुर्यादित्यर्थः ।

1 वी. मि., संस्का., २३४.—"तदयं सङ्कलितोऽर्थः । यथाव्यवस्थं नामकरण-कालाः".

2 शङ्खः इति स्मृतिचन्द्रिकायाम् (संस्का., पृ. ५३).

3 "'कुलदेवतानक्षत्राभिसंबद्धं पिता नाम कुर्यात् तदन्यो वा कुलवृद्धः' इति कल्पतरुशङ्खलिखितवचनात् नामान्तकरणव्यवहारः" इति संस्कारतत्त्वे (पृ. ९१८).

पारस्करः—[१, ६, १७, १–६]

[1]दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम [करोति। द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितम्। अयुजाक्षरं आकारान्तं स्त्रियै तद्धितम्।]

वर्गतृतीयचतुर्थपञ्चमा हकारश्च 'घोषवन्तः'। 'अन्तः' मध्ये 'अन्तस्थाः' यरलवाः। 'अभिनिष्ठानं' समाप्तिः। 'कृतं' कृत्प्रत्ययान्तं, न तद्धितप्रत्ययान्तम्। स्त्रियाः पुनरयुजाक्षरमाकारान्तं तद्धितान्तं वा अयुजाक्षरम्।

बैजवापगृह्यम्

पिता नाम करोत्येकाक्षरं द्व्यक्षरं चतुरक्षरं वा अपरिमितं वा तथा त्र्यक्षरमीकारान्तं स्त्रियै।

'अपरिमिताक्षरं' उक्ताक्षरसंख्यातिरिक्तसंख्यम्।

मनुः—[२, ३१]

मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम्।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्॥

'मङ्गल्यं' मङ्गलप्रतिपादकम्। यथा 'लक्ष्मीधरः'। 'बलान्वितं' शौर्यप्रतिपादकं [यथा युधिष्ठिरः। 'धनसंयुक्तं' धनप्रतिपादकशब्दसंयुक्तं यथा महाधनः। 'जुगुप्सितं' निन्दाप्रतिपादकशब्द] संयुक्तं यथा नरदासः।

यमः[2]

शर्म देवश्च विप्रस्य वर्म राजा च भूभुजः।

1 वी. मि., सं., २३२ ends the quotation with करोति.

2 Lacuna in commentary in text; made up from वी. मि., सं., २४३.

गुप्तो दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥

मनुः—[२, ३२-३३]

[शर्मवत् ब्राह्मणस्य स्याद्राज्ञो राजसमन्वितम् ।]
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥
स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोरमम् ।
मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥

'पुष्टिसंयुक्तं' यथा धनपुष्ट इति। 'सुखोद्यं' सुखोच्चार्यम् [यशोदा इत्यादि।] 'अक्रूरं' अभयानकम्। 'आशीर्वादाभिधानवत्' यथा सुभद्रेति[1]।

विष्णुपुराणे—[३, १०, ९-११]

गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ।
नार्थहीनं न चाशस्तं नापशब्दयुतं तथा ॥
नामङ्गल्यं जुगुप्स्यं वा नाम कुर्यात् समाक्षरम् ।
नातिदीर्घं नातिह्रस्वं नातिगुर्वक्षरान्वितम् ॥
[सुखोच्चार्यं तु तन्नाम कुर्याद्यत्प्रवणाक्षरम् ।]

'अशस्तं' यथा भूतान्तादि।

## अथ निष्क्रमणम्

तत्र भविष्यपुराणे

द्वादशेऽहनि राजेन्द्र शिशोः निष्क्रमणं गृहात् ।

1 'सुखोद्यं' सुखोच्चार्यं यशोदा इत्यादि। 'अक्रूरं' हिंसाद्यर्थरहितं कुलघ्नीत्यादि। 'विस्पष्टार्थं' अव्याख्येयं, इन्दिरा इत्यादि। इदं उदाहरणद्वयं व्यतिरेके। 'मनोहरं' कमनीया इत्यादि। 'मङ्गल्यं' सुभद्रा इत्यादि। 'दीर्घवर्णान्तं' सुमित्रा इत्यादि। 'आशीर्वादाभिधानवत्' सौभाग्यवतीत्याद्युन्नेयम्'। (वी. मि., सं, २४३).

चतुर्थे मासि कर्तव्यं तथान्येषां मतं विभो ॥

'द्वादशेऽहनी'ति शाखाभेदविकल्पः ।

[1]यमः

ततः तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम् ।
चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम् ॥

अतुल्यार्थत्वात् सूर्यचन्द्रदर्शनयोः समुच्चयः[2] ।

लौगाक्षिः

तृतीयेऽर्धमासे दर्शनमादित्यस्य ।

तृतीये पक्ष इत्यर्थः[3] ।

विष्णुः—[२७, १०]

चतुर्थे मास्यादित्यस्य दर्शनम् ।

अत्रापि शाखाभेदाद्विकल्पः । अनयोस्तु चन्द्रसूर्यदर्शनयोराभ्युदयिकं श्राद्धं नास्ति । [यथा]

सूर्येन्द्वोः कर्मणी ये च तयोः श्राद्धं न विद्यते ।

इति छन्दोगपरिशिष्टे[4] ।

## अन्नप्राशनम्

[अथ यमः

ततोऽन्नप्राशनं मासि षष्ठे] कार्यं यथाविधि ।

1 पराशरमाधवीय, I, ii, p. 26.

2 'सूर्यचन्द्रदर्शनयोरतुल्यार्थत्वात् समुच्चय' इति कल्पतरुः (वी. मि., सं., २५०).

3 'अर्धमासः' पक्षः । तृतीये पक्ष इत्यर्थः (वी. मि., सं., २५०).

4 इति कात्यायनवचनादिति वी. मि. पठति । 'कल्पतरुस्तत्र नान्दीश्राद्धं नेच्छति' (वी. मि., सं., २५६) । संस्कारतत्त्वे (१, ९२०) च—"'सूर्येन्द्वोः कर्मणी ये तु तयोः श्राद्धं न विद्यते' इति छन्दोगपरिशिष्टाच्चान्द्रकर्मत्वेन श्राद्धपर्युदासः कल्पतरुप्रभृतिभिरुक्तो युक्त इति वाच्यम् ।"

अष्टमे मासि कर्तव्यं यद्वेष्टं मङ्गलं कुले ॥

मनुः

[षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले[1] ।]

यद्वेति कालप्रक्रमात्तद्गोचर एवायं विकल्पः । तेनायमर्थः—यत्कालवच्च अन्नप्राशनमिष्टमभिमतं कुले भवति तस्मिन्वा काले कर्तव्यम् ।

[2]शङ्खलिखितौ

संवत्सरेऽन्नप्राशनम् ।

लौगाक्षिः

[षष्ठेषु अन्नप्राशनम् ।] जातेषु दन्तेषु वा ।

## अत्रैव गुणफलानि

तत्र पारस्करः [१, १९, ७-१३]

[प्राशनान्ते] सर्वान् रसान् सर्वमन्नमेकत उद्धृत्या-[थैनं]प्राशयेत् तूष्णीं हन्तेति वा । ['हन्तकारं मनुष्या' इति श्रुतेः । भारद्वाज्या मांसेन वाक्प्रसारकामस्य । कपिञ्जलमांसेनान्नाद्यकामस्य । मत्स्यैर्जवनकामस्य । कृकषाया आयुष्कामस्य । आट्या ब्रह्मवर्चसकामस्य । सर्वैः सर्वकामस्य । अन्नपर्याय वा [ततो ब्राह्मणभोजनम्] ।

['[3]भारद्वाज्या' भारद्वाजपक्षिजातीयस्त्रियाः ।] 'वाक्प्रसारितं'वाक्प्रसरः । 'कपिञ्जलो'गौरतित्तिरिः । 'कृकषा'

1 २, ३४.
2 वी. मि. सं., २६८.
3 [ ], वी. मित्रोदयादुद्धृत: (सं., २७७).

गोधा। ['आव्याः' शरालिजातीयपक्षिस्त्रियाः[1] ।] 'अन्न-पर्याय' अन्नपरिपाट्या।

शाङ्खायनगृह्यम्—[१, २७, १–६]

षष्ठे मासि अन्नप्राशनम्। आजमन्नादिकामः। तैत्तिरं ब्रह्मवर्चसकामः। मात्स्यं जवनकामः। घृतौदनं तेजस्कामः। दधि-मधु-घृत-मिश्रमन्नं प्राशयेत्।

'जवनं' बीजम्[2] ।

## अथ चूडाकरणम्

तत्र मनुः—[२, ३५]

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः।
प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात्॥

'प्रथमेऽब्दे' वर्तमाने अन्नप्राशनानन्तरम्।

यमः

ततः संवत्सरे पूर्णे चूडाकर्म विधीयते।
द्वितीये वा तृतीये वा कर्तव्यं श्रुतिचोदनात्॥

'द्वितीये पूर्णे' इत्यनुषङ्गः। अन्यथा संवत्सरे पूर्णे इत्यनेनैव वा तल्लब्धत्वात् द्वितीये इत्यवचनीयं स्यात्। 'तृतीये भूयिष्ठे गते' इति लौगाक्षिवचनात्[3] ।

1 [ ], वी. मित्रोदयादुद्धृतः (सं., २७७).

2 'जवनं' वीर्यम् (वी. मि., सं., २७७).

3 अत्र वीरमित्रोदयः (सं., २९६–२९७)—

"अत्र 'अपूर्णे' इति पदच्छेदः। स च द्वितीयादिष्वप्यनुषज्यते। ततश्च प्रथमादिवर्षाणामेवाधिकरणत्वं सिद्धयति। यत्तु कल्पतरुणा 'प्रथमेऽब्दे तृतीये वा' इति मनुवाक्ये 'प्रथमेऽब्दे वर्तमाने' इति व्याख्याय, 'ततः संवत्सरे पूर्णे चूडाकर्म विधीयते' इति

**शङ्खलिखितौ**

**तृतीये वर्षे चूडाकरणं पञ्चमे वा।**

**आश्वलायनगृह्यम्—[१, १७, १]**

**तृतीये वर्षे चौलं यथाकुलधर्मं वा।**

[1]**लौगाक्षिः**

**तृतीयस्य वर्षस्य भूयिष्ठे गते चूडाकरणम्। दक्षिणतः कमुञ्जा वसिष्ठानाम्। उभयतोऽत्रिकाश्यपानाम्। मुण्डा भृगवः। पञ्चचूडा अङ्गिरसः। वाजिमेके मङ्गलार्थं, शिखिनोऽन्ये। यथाकुलधर्मं वा। शुद्धस्य पुण्याहे वा।**

**'भूयिष्ठे' बहुतमे। 'कमुञ्जा' चूडा। 'वाजिः' केशपंक्तिः। 'शुद्धस्य' शुक्लस्य।**

**आश्वलायनगृह्यम्—[१, ४, १–२]**

**उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः। सर्वकालमेके विवाहम्।**

यमवाक्ये नञ्प्रश्लेषमकृत्वा, 'संवत्सरे पूर्णे' इति व्याख्यातम्। तत् पूर्वापरविरोधात् चिन्त्यम्। संभवत्यविरोधे विरुद्धव्याख्यानानौचित्यात्। यदपि द्वितीये संपूर्णे तृतीये तु असंपूर्णे, 'तृतीये भूयिष्ठगते' इति लौगाक्षिस्मरणादिति व्याख्यातम्, तदपि तथैव। विलम्बोपस्थितिकवाक्यान्तरैकवाक्यतापेक्षया समानवाक्यस्थितपदानुषङ्गस्य शीघ्रोपस्थितकत्वेनाभ्यर्हितत्वात् इत्यलं वृद्धविरोधेन। वाशब्दद्वयोपादानं पञ्चमसप्तमवर्षयोरपि ग्रहणाय" ॥

1 **पराशरमाधवीय**, I, ii, 29—'कमुञ्जा' केशपङ्क्तिः। अत्र यथास्वशाखं व्यवस्था.

वीरमित्रोदय, सं., पृ. ३१५—'कमुजा' शिखा। सा दक्षिणतो नियम्यते। सा उत्सर्गतो मध्ये शिरसि कार्या। वसिष्ठानां एकप्रवरत्वे एकैव शिखा, सा च दक्षिणतो नियम्यते। त्र्यार्षेयत्वपक्षे तिस्रः शिखाः। अत्रीणां कश्यपानां च उभयतो वामे दक्षिणे च। द्व्यार्षेयपक्षे छेदम्। त्र्यार्षेयपक्षे तिस्रः। तत्र पार्श्वयोः द्वे मध्ये चैकेति। भृगूणां मुण्डत्वं वंशसमाचारपक्षे, त्र्यार्षेयपक्षे तिस्रः शिखाः, पञ्चार्षेयपक्षे पञ्च। तथाऽङ्गिरसामपि त्र्यार्षेयपक्षे तिस्रः पञ्चार्षेयपक्षे पञ्च। एवमन्येषामपि आर्षेयसमसङ्ख्यया शिखा भवन्ति.

अयं चूडाकरणकालानां विकल्पः शाखाभेदाऽपेक्षया व्यवस्थितो बोद्धव्यः ।

## स्त्रीणां संस्काराः

अथ मनुः—[२, ६६–६८]

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥
वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥

[एष प्रोक्तो द्विजातीनामौपनायनिको विधिः ॥]

'आवृत्' इतिकर्तव्यता । 'औपनायनिकः' उपनयनकारी । चूडाकरणान्तसंस्कारानन्तरम्—

याज्ञवल्क्यः—[१, १३]

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ।

## अनुपनीतधर्माः

इदानीमुपनयने वक्तव्ये तत्पूर्वकाले प्रतिषिद्धान्युच्यन्ते । तत्र—

मनुः—[२, १७२]

[1]नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते ।
शूद्रेण हि समस्तावद्यावद्वेदे न जायते ॥

'स्वधानिनयनात्' श्राद्धमन्त्रात् ।

1 प्रागुपनयनाद्वेदं नोच्चारयेत् । 'स्वधाव्यतिरिक्तं वेदं नवश्राद्धादौ नोदाहरेत् । यावद्वेदे न जायते तावदसौ शूद्रेण तुल्यः' इति कुल्लूकः.

वसिष्ठः—[२, ६–७]

अथाप्युदाहरन्ति[1]—

न ह्यस्मिन् विद्यते कर्म किञ्चिदामौञ्जिबन्धनात् ।
[वृत्त्या शूद्रसमो ह्येष यावद्वेदे न जायते ॥]
अन्यत्रोदककर्मस्वधापितृसंयुक्तेभ्यः ।

प्रेतपित्राद्युदकतर्पणश्राद्धपितृसंयुक्तभूमिच्छत्रादिदानादन्यत्रेत्यर्थः ।

दक्षः

जातमात्रः शिशुस्तावद्या॰ दष्टौ समा वयः ।
स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शितः ॥

'समा' वर्षाणि । 'व्यक्तिमात्रेण' न तु कर्माधिकारिकत्वेन ।

उपनीतस्य दोषोस्ति क्रियमाणैर्विगर्हितैः ।
अप्राप्तव्यवहारोऽसौ बालः षोडशवार्षिकः ॥

अनेन धनप्रयोगादिव्यवहारे स्वातन्त्र्याभावः सूचितः ।

गौतमः—[२, १–९]

प्रागुपनयनात् कामचारवादभक्षः । अहुतात् । ब्रह्मचारी । यथे[redacted]त्रपुरीषो भवति । नास्याचमनकल्पो विद्यते । अन्यत्रापमार्जनप्रधावनप्रोक्षणेभ्यः[2] । न

1 'हारीतोप्युदाहरति' इति मुद्रितवासिष्ठे.

2 'अवोक्षण' इति मस्करि-धृतपाठः ; 'अवोक्षणं' चण्डालादिस्पर्शने प्रोक्षणम् । 'अवोक्षणं' रजस्वलादिस्पृष्टस्य अधोमुखेन पाणिना जलसेचनम् । (वी. मि., सं., ३२६).

तदुपस्पर्शनादशौचम्। न त्वेवैनमग्निहवनबलिहरणयोर्नियुञ्ज्यात्। न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनात्॥

'कामचारवादभक्षः' इत्यनेन इच्छया अश्लीलभाषणपर्युषितभक्षणादीनि न निषिद्धानीति प्रतिपादितम्। यानि पुनरत्यन्तपतनीयानि तानि निषिद्धान्येव, स्मृत्यन्तरे प्रायश्चित्तदर्शनात्। 'अहुतादिति' हुतं विना, हुतस्याऽभक्षणम्। 'ब्रह्मचारी' मैथुनवर्जी। 'यथोपपादमूत्रपुरीषः' उदङ्मुखादिनियमवान्न स्यादित्यर्थः। 'आचमनकल्पः' प्राङ्मुखत्वश्रोत्रस्पर्शादि। आचमनं तु करोत्येव। सर्वत्र कल्पनिषेधे प्राप्तेऽपवादमाह 'अन्यत्र' इति। 'अपमार्जनं' उच्छिष्टादिलिप्तस्य उदकेन पाणिना निर्मलीकरणम्। 'प्रधावनं' पुरीषादिलिप्तस्य प्रक्षालनम्। 'प्रोक्षणं' अशुचिस्पृष्टस्योदकेनाभ्युक्षणम्। एतेन कृतापमार्जनादेः स्पर्शे नाशौचम्। अग्निहवनबलिहरणयोर्नियुञ्ज्यादिति, सहकारित्वेनापीति शेषः।

न वै कन्या न युवतिर्नाल्पविद्यो न बालिशः[1]।

इति बालस्य साक्षाद्धोमकर्तव्यनिषेधात्।

वृद्धशातातपः

प्राक् चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः।
कुमारः स तु विज्ञेयो यावन्मौञ्जीनिबन्धनम्॥

1 मनुः (११, ३६)—
न वै कन्या न युवतिर्नाल्पविद्यो न बालिशः।
होता स्यादग्निहोत्रस्य नार्तो नासंस्कृतस्तथा॥
वीरमित्रोदये (सं. ३२९) स्मृतिचन्द्रिकायां च (सं., पृ. ६०) "नैव कन्या" इति पाठः। "अत्र कुमारीनिषेधः अग्निहोत्रविषयः" (वी. मि., सं., ३२९).

शिशोरभ्युक्षणं प्रोक्तं बालस्याऽऽचमनं स्मृतम् ।
रजस्वलादिसंस्पर्शे स्नातव्यं तु कुमारकैः ॥

वर्जयेदित्यनुवृत्तौ गौतमः—[२, २६]

मद्यं नित्यं ब्राह्मणः[1] ।

ब्रह्मपुराणे

मातापित्रोरथोच्छिष्टं बालो भुञ्जन् सुखी भवेत् ।

आपस्तम्बः—[२, १५, १९-२५]

आन्नप्राशनाद्गर्भा नाप्रयता भवन्ति। आ परिसंवत्सरादित्येके। यावता वा दिशो न प्रजानीयुः। पुरोपनयनादित्यपरम्। अत्र ह्यधिकारः शास्त्रैर्भवति। सा निष्ठा। स्मृतिश्च।

1 'मद्यं' गुडमधुपिष्टकृतं अन्यदपि यन्मधुकरं तत्सर्वं ब्राह्मणो नित्यं प्रागप्युपनयनाद्वर्जयेत्। एवं क्षत्रियवैश्ययोः प्रागुपनयनादूर्ध्वं च ब्रह्मचर्यात् पैष्टीवर्जितायाः सुरायाः अप्रतिषेधः। (मस्करिभाष्ये)।

॥ ४ ॥

# अथोपनयनम्

तत्र देवलः

प्रथमं मातापितृभ्यां गर्भाधानादिभिः संस्कृतो गर्भाष्टमे वर्षे उपनयनार्हो भवति। तत्रोपाध्यायः पिता, माता गायत्री। एवमुपनीतो द्विपितृको, द्विजातिः स्यात्।

'द्विपितृको' द्विमातापितृको, एकशेषात्।

मनुः—[२, १६९]

मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनात्।
[1]तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात्॥

आपस्तम्बः—[१, १, १९]

वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यं, गर्भाष्टमेषु ब्राह्मणं, गर्भैकादशेषु राजन्यं, गर्भद्वादशेषु वैश्यम्।

[बुधः]

गर्भाष्टमे वर्षे वसन्ते ब्राह्मण आत्मानमुपनाययेत्। एकादशे क्षत्रियो ग्रीष्मे, द्वादशे वैश्यो वर्षासु।

1 'प्रथमद्वितीयतृतीयजन्मकथनं चेदं द्वितीयजन्मस्तुत्यर्थं, द्विजस्यैव यज्ञदीक्षायां अधिकारात्'। (कुल्लूकभट्टः).

आत्मानमुपनापयेदिति, पित्राद्यधिकारिविरहे। वर्षाशब्देन 'ऋतुः संवत्सर' इति शरदस्तदन्तर्गतत्वात् सैवोपात्ता।

विश्वामित्रयाज्ञवल्क्यौ—[याज्ञ. १, १४]

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्।
राज्ञामेकादशे सैके[1] विशामेके यथाकुलम्॥

उपनयनमेवोपनायनम्। 'विशां सैके एकादशे' इत्यन्वयाद्द्वादश इत्यर्थः। यथाकुलमिति, कुलधर्मानुसारेण कालान्तरेऽपीत्यर्थः। उपनयनकालक्रमे

पारस्करः—[२, २, ४]

यथामङ्गलं वा सर्वेषाम्[2]।

यस्मिन्नपि काले क्रियमाणं कुले मङ्गलाय तत् भवति तत्रापि कर्तव्यमित्यर्थः।

लौगाक्षिः

सप्तमे वर्षे ब्राह्मणस्योपनयनं, नवमे राजन्यस्यैकादशे वैश्यस्य।

'सप्तमे वर्षे' इत्यादि लौगाक्षिमनुवचनैकवाक्यतार्थं न गर्भादित्वं किंतु जन्मादित्वमेव।

1 'सैके एकादशे' द्वादश इत्यर्थः। गर्भग्रहणं सर्वत्र अनुवर्तते (मिताक्षरा).

2 'यथामङ्गलं वा सर्वेषां' इति पक्षान्तरमाह। अथवा सर्वेषां ब्राह्मणक्षत्रियविशां 'यथामङ्गलं,' यथाकुलधर्मम्। यद्वा 'यथामङ्गलशब्देन स्मृत्यन्तरोक्तपञ्चवर्षादिकालसङ्ग्रहः। (हरिहरः).

पैठीनसिः

गर्भात् पञ्चमेऽब्दे वा ब्राह्मणमुपनयेत् गर्भाष्टमे वाष्टमे वा, गर्भाष्टमे राजन्यं गर्भद्वादशे वा, गर्भद्वादशे वैश्यं गर्भषोडशे वा।

उपनयेदित्यनुवृत्तौ

आपस्तम्बः—[१, १, २०–२६]

अथ काम्यानि। सप्तमे ब्रह्मवर्चसकामम्। अष्टमे आयुष्कामम्। नवमे तेजस्कामम्। दशमेऽन्नाद्यकामम्। एकादश इन्द्रियकामम्। द्वादशे पशुकामम्।

गौतमः—[१, १, ७–९, १३]

उपनयनं ब्राह्मणस्याष्टमे। नवमे पञ्चमे वा काम्यम्। गर्भादिसंख्या वर्षाणाम्। एकादशद्वादशयोः क्षत्रियवैश्ययोः।

मनुः—[२, ३७]

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे॥

पैठीनसिः

द्वादशषोडशविंशतिश्चेत्यतीता अविरुद्धकाला भवन्ति।

अत्रेयं व्यवस्था—'वसन्ते ब्राह्मणमुपनयीत' इत्यापस्तम्बवचनेन [illegible] उपनयने विहितः। मनुविश्वामित्रयाज्ञवल्क्यपारस्करलौगाक्षिपैठीनसिवाक्येषु विनोपनिबन्धनेन श्रवणाद् ब्राह्मणस्य गर्भाष्टमगर्भपञ्चम-

जन्माष्टमाः, क्षत्रियस्य गर्भाष्टमजन्मनवमगर्भैकादश-गर्भद्वादशाः, वैश्यस्य गर्भैकादशगर्भद्वादशगर्भषोडशा नित्याः। यथाकुलं चान्योऽपि कालो नित्यः सर्ववर्णानाम्। अत्राऽपि प्राधान्यात् सर्वस्मृतिकारसंमतत्वाच्च गर्भाष्टम-गर्भैकादशगर्भद्वादशा यथाक्रमं ब्राह्मणक्षत्रियवैश्यानां मुख्याः। तथा च—

मनुः—[२, ३६]

गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥

गर्भपञ्चमस्य तु पैठीनसिनानुपबन्धमेव स्मरणदृष्टस्य च सद्यः सावित्रीपठनस्य तदवधारणस्य च केनचिद्देवाति-प्राज्ञेन स्पष्टवाचा कर्तुं शक्यत्वात् नित्यत्वमेव। प्रतिनित्यं सावित्रीपठनं च सद्य एव गायत्रीप्रवरणं ब्राह्मणस्येति श्रुतेः। क्षत्रियस्य गर्भाष्टमनवमौ कुलव्यवस्थया नित्यौ। एवमेकादशो वैश्यस्य। अन्ये चाष्टमादयो द्वादशादि वर्ण-क्रमेणाविरुद्धाः। 'द्वादशषोडशविंशतिश्चेत्यतीता अविरुद्ध-काला भवन्ति' इति पैठीनसिवचनात्तेषां च पूर्वपूर्वाऽसंभवे उत्तरोत्तरविधिना अतीतत्वेनाविरोधवचनात्। अ[illegible]शि-ष्टविकल्पाच्च। 'ऊर्ध्वं तु द्वादशात्' इत्याषोडशद्वाविंशति चतुर्विंशतिर्यावत् यथाक्रमं वर्णानां स्वल्पः प्रत्यवायः। द्वादशपर्यन्तमेवाविरोधिस्मृतेः। ऊर्ध्वं तु व्रात्या व्रात्यस्तोमेन वोपनयनार्हाः। पञ्चमादिषु कामनोपनिबन्धत्वे तु संयोग-पृथक्त्वेन नित्याः काम्याश्च। येषां तु 'राज्ञो बलार्थिनः षष्ठ' इत्यादीनां कामनोपनिबन्धेनैव स्मरणं, तेषां काम्यत्वम्।

किंतु स्वरूपासिद्धेस्तस्मादेवोपनयनरूपः संस्कारो नित्यः सिद्धः। गोदोहनेन प्रणयनसिद्धेर्यथा क्रमकारार्थं चमसेन न पुनः प्रणयनम्। नापि त्रिवर्षस्योपनयनम्। तत्र विशेषो ल्लेखनाभावेनापेक्षकस्याभावात्, शरादिना यथा न प्रणयनमिति। अथोपनयनातिक्रमे व्रात्यता। तत्र सापेक्षवाक्येषु वर्षोपनयनवर्णक्रमानुवृत्तिर्मन्तव्या।

मनुः—[२, ३८]

आ षोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते।
आ द्वाविंशात्क्षत्रबन्धोरा चतुर्विंशतेर्विशः॥

अभिविधावाङ्।

[1]औपनायनिकः कालः परः षोडशवार्षिकः।
द्वाविंशतिः परो ह्यस्य स्याच्चतुर्विंशतिः परः॥

इति व्यासवचनात्।

याज्ञवल्क्यः—[१, ३८]

अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः॥

मनुः—[२, ४०]

नैतैरपूतैः विधिवदापद्यपि हि कर्हिचित्।
ब्राह्मान्[2] यौनांश्च संबन्धानाचरेद्ब्राह्मणैः सह॥

'अपूतैः' अकृतप्रायश्चित्तैः। ब्रह्मग्रहणं प्रदर्शनार्थम्।

1 वी. मि. सं., ३४३.

2 ब्रह्मसम्बन्धोऽध्यापनादि (स्मृ. च., सं., ७३)। "सम्बन्धातिप्रसङ्गवारणायाह ब्राह्मानिति। उपनयनाध्ययनाध्यापनयाजनप्रतिग्रहान्"। (वी. मि., सं., ३४९).

अथोपनेतुरुपनेयस्य च निरूपणम् ॥

## तत्र आचार्यलक्षणम्

यमः

सत्यवाग् धृतिमान् दक्षः सर्वभूतदयापरः।
आस्तिको वेदनिरतः शुचिराचार्य उच्यते ॥
वेदाध्ययनसंपन्नो वृत्तिमान् विजितेन्द्रियः।

'दक्षः' व्रतोत्साही। 'वृत्तिमान्' यथाविहितजीवनहेतुवृत्तिमान्।

हारीतः

न याजयेद्वृत्तिहीनं वृणुयाच्च न तं गुरुम्।
न हि मज्ज्ञा करौ दिग्धौ रुधिरेण विशुध्यतः ॥

'मज्ज्ञा' इति मज्जन्शब्दस्य तृतीया।

शङ्खलिखितौ

नोन्मत्तमूकान् संस्कुर्यात्।

विष्णुः—[२९, ४–६]

[1] नापरीक्षितं याजयेत्। नाध्यापयेत्। नोपनयेत्।

आपस्तम्बः—[१, १, ६]

अशूद्राणामदुष्टकर्मणामुपायनम्।

'अदुष्टकर्मणां' मद्यपानादिरहितानाम्।

1 स्मृ. चं., सं., १४१.

कात्यायनः

[1]सावित्र्या ब्राह्मणमुपनयीत, त्रिष्टुभा राजन्यं, जगत्या वैश्यं, सर्वेषां वा सावित्री।

[लौगाक्षिः][2]

तत्सवितुर्वरेण्यमिति सावित्री ब्राह्मणस्य। तां सवितुरिति राजन्यस्य। विश्वारूपाणीति वैश्यस्य।

यमः

अमन्त्रमपि वा कुर्यात् सर्वमावृत्य दक्षिणम्॥

एतच्च षोडशवर्षपर्यन्तं कस्यांचिदापदे मन्त्रस्योपनेतुरभावे उपनयनकालातिक्रमसंभावनायां बोद्धव्यम्।

गोभिलः—[२, १०, ७]

यदहरुपैष्यन्माणवको भवति प्रग एवैनं तदहर्भोजयन्ति।

'प्रग एव' प्रातरेव[3]।

उपनेयाधिकारे पारस्करः—[२, २, ५]

ब्राह्मणान् भोजयेत्।

शङ्खलिखितौ

पयोयवाग्वामिक्षाहाराः क्रमशो द्विजातीनाम्[4]॥

1 अपरार्क, पृ. ३३.

2 कात्यायनलौगाक्षिनामनी मूलमातृकायां न स्तः, अत्रापरार्कादुद्धृते।

3 'प्रगे' प्रातः (अपरार्क, ३२)। 'यदहः' यस्मिन्नहनि, 'उपैष्यन्' उपनयनं कारयिष्यन्, माणवको उद्यतो भवति। 'माणवकः' अनधीतवेदः। 'भोजयन्ति' क्षीरादिकं इति शेषः॥ (संस्कारतत्वे, पृ. ९२९–९३०).

4 तथा च ब्रह्मचारिकाण्डे कल्पतरुधृतशङ्खलिखितौ—'पयोयवाग्वामिक्षाहाराः क्रमशो द्विजातीनाम्"॥ (संस्कारतत्वे, I, पृ. ९३०).

उपनयनाधिकारा्‌पनेयानां 'द्विजातीनाम्'। 'आमिक्षा' दधिप्रक्षेपाद्विनष्टक्षीरस्कन्धभागः।

## अथोपवीतादीनि

तत्र मनुः—[२, ४४]

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्।

शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्॥

'आविकसौत्रिकं' ऊर्णासूत्रनिर्मितम्।

बौधायनः—[१, ८, ५]

कौशं सौत्रं वा त्रिः त्रिवृद्यज्ञोपवीतमानाभेः [दक्षिणं बाहुमुद्धृत्य सव्यमन्वधाय शिरो ऽवदध्यात्।]

'कौशं' कृमिकौशोद्भवम्, पट्टसूत्रमयमिति यावत्[1]।

तथा च आदित्यपुराणे

क्षौमजं वाथ कार्पासं पट्टसूत्रमथापि वा।

दध्यात् यज्ञोपवीतं यो न तं हिंसन्ति वायसाः[2]॥ इति।

'सौत्रं' कार्पासम्। 'त्रिः त्रिवृत्' नवगुणम्। 'नव वै त्रिवृत्' इति श्रुतेः।

छन्दोगपरिशिष्टे कात्यायनः

उर्ध्वं तु त्रिवृतं कार्यं तन्तुत्रयमधोवृतम्।

त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते॥

1 'कौशं' कृमिकोशोद्भवं पट्टसूत्रमयमिति यावदिति कल्पतरुः। वस्तुतस्तु 'कौशं' कुशपत्रनिर्मितम्॥ (वी. मि., सं., ४१५).

2 'वायसाः' राक्षसाः (वी. मि., सं., ४१५)॥ शणसूत्रमिति वीरमित्रोदयधृतपाठः.

वामावर्तं त्रिगुणं कृत्वा प्रदक्षिणावर्तनं नवगुणं स्यात्। तदेवं च त्रिसरं कार्यमित्येतदुक्तं 'त्रिवृतं चोपवीतं' इत्यनेन।

तथा

पृष्ठदेशेऽथ नाभ्यां च धृतं यद्विन्दते कटिम्।
तद्धार्यमुपवीतं स्यान्नातिनीचं न चोच्छ्रितम्॥

वामस्कन्धकृतं नाभिपृष्ठवंशयोर्धृतं यथा कटिपर्यन्तं प्राप्नोति तावत्प्रमाणं कर्तव्यमित्यर्थः। छन्दोगपरिशिष्टे कात्यायनेनोपवीतावस्थापनस्यानुवादे परिमाणविशेष-विधिः।

अथ गौतमः—[१, १९–२३]

वासांसि शाणक्षौमचीरकुतपाः सर्वेषाम्। कार्पासं वाऽविकृतम्। काषायमप्येके। वार्क्षं ब्राह्मणस्य। माञ्जिष्ठहारिद्रे इतरयोः।

शणमयं 'शाणम्'। अतसी 'क्षुमा'। 'चीरं' कुशादि-निर्मितम्। 'कुतपः' पार्वतीयछागरोमनिर्मितः। 'अविकृतं' रञ्जकद्रव्यासंपृक्तम्। काषायपक्षे ब्राह्मणस्य वृक्षकाषायाक्तं, क्षत्रियवैश्ययोर्माञ्जिष्ठहारिद्रम्।

वसिष्ठः—[११, ६४–६७]

शुक्लमहतं वासो ब्राह्मणस्य। कार्पासं माञ्जिष्ठं क्षत्रियस्य। हारिद्रं कौशेयं वैश्यस्य। सर्वेषां वा तान्तवमरक्तम्।

'कौशेयं' कृमिकोशोत्थम्। 'तान्तवं' अत्र कार्पासम्।

[1]शङ्खः

क्षौमदुकूलसौत्राणि वासांसि त्रयाणां वर्णानाम् ।

यमः

क्षौमकार्पासकुतपाश्चर्मवल्कलकम्बलाः ।
सर्वं तु धारयेच्छुक्लं वासस्तत्पारिधानिकम् ॥

'पारिधानिकं' परिधानप्रयोजनम् ।

[2]मनुः—[२, ४१]

कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥

'कृष्णः' कृष्णमृगः । 'रुरुः' बहुशाखाश्रृङ्गो मृगः । 'बस्तः' छागः । 'आविकं' मेषरोमनिर्मितम् ।

[3]आपस्तम्बः—[१, ३, ३–१०]

हारिणमैणेयं वा कृष्णं ब्राह्मणस्य । कृष्णं चेदनुपस्तीर्णासनशायी स्यात् । रौरवं राजन्यस्य । बस्ताजिनं वैश्यस्य । आविकं सार्ववर्णिकम् । [कम्बलश्च ।] ब्रह्मवृद्धिमिच्छन्नजिनान्येव वसीत, क्षत्रवृद्धिमिच्छन् वस्त्राण्येव, उभयवृद्धिमिच्छन् उभयमिति हि ब्राह्मणम् । अजिनं त्वेवोत्तरं धारयेत् ।

'ऐणेयं' एणीसम्बन्धि, एणी गौरमृगी । यदा हारिणं तदा 'कृष्णं' तच्च नोपस्तीर्य आसीत शयीत वा । 'आविकं' मेषचर्म । 'सार्ववर्णिकं' जातिसंबन्धम् । 'उत्तरं' उत्तरीयम् ।

1 वी. मि., सं., ४१२.
2 वी. मि., सं., ४१३.
3 वी. मि., सं., ४१२.

पारस्करः—[२, ५, १७–२०]

[1][ऐणमजिनमुत्तरीयं ब्राह्मणस्य। रौरवं राजन्यस्य।] आजं गव्यं वा वैश्यस्य। सर्वेषां वा गव्यमसति प्रधानत्वात्।

यमः

[कृष्णाजिनं ब्राह्मणस्य रौरवं क्षत्रियस्य तु।
बस्ताजिनं तु वैश्यस्य सर्वेषां रौरवाजिनम्[2] ॥]

'सर्वेषां रौरवाजिनम्' इतरचर्म न संभवति इति शेषः।

विष्णुः—[२७, १९–२०]

[कार्पासशाणाविकान्युपवीतानि वासांसि।] मार्गवैयाघ्रबास्तानि चर्माणि।

पैठीनसिः

कृष्णरुरुपृषतानामाजिनानि।

## अथ मेखलाः

तत्र मनुः—[२, ४२]

मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥

'त्रिवृत्' त्रिगुणीकृता। 'समा' न क्वचित् स्थूला, न क्वचित् सूक्ष्मा। 'श्लक्ष्णा' अस्थूला।

1 अत्र 'ऐणं उत्तरीयं' इति वचनात्, प्रागुक्तानि शाणादीनि उत्तरीयाणीति गम्यते। असति यथोक्ताजिनसम्भवे गव्यं 'प्रधानत्वात्' प्रशस्तत्वात् इत्यर्थः। वी. मि., सं, ४१३.

2 मूलमातृकायां त्रुटितं, वी. मि., सं., ४१४ लब्धम्.

यमः

एतासामप्यलाभे तु कुशाश्मन्तकबल्वजैः ।
मेखला त्रिवृतः कार्याः ग्रन्थिनैकेन वा त्रिभिः ॥

'त्रिवृत्त्वं' त्रिर्वेष्टनेन । ग्रन्थिसंख्या च आचारात् प्रवरसंख्यया वेत्यवस्थिता ।

आपस्तम्बः—[१, २, ३३-३७]

मौञ्जी मेखला त्रिवृद्ब्राह्मणस्य शक्तिविषये दक्षिणावृत्तानाम् । धनुर्ज्या राजन्यस्य । मौञ्जी वा अयोमिश्रा । आवीसूत्रं वैश्यस्य । सैरी ताम्बूली वा इत्येके ॥

'शक्तिविषये' मुञ्जप्राप्तौ संभवन्त्याम् । 'दक्षिणावृत्तनां' प्रदक्षिणावर्तितानां, योग्यत्वात् मुञ्जादिद्रव्याणामित्यर्थः। 'अयोमिश्रा' लोहसूत्रमिश्रा। 'सैरी' सीरस्य हलस्य योक्त्रमिति यावत्। 'ताम्बूली' मूलोदकवृक्षनिर्मितेति कपर्दी[1] ।

गोभिलः—[२, १०, १०]

मुञ्जकाशताम्बूल्यो रशनाः[2] ।

पैठीनसिः

मौञ्जी मेखला अश्मन्तकजा वा ब्राह्मणस्य, बैल्वजा मौर्वी वा राजन्यस्य, शाणी क्षौमी वा वैश्यस्येति ।

['अश्मन्तकः' कुशसदृशः तृणविशेषः ।][3]

1 वी. मि., सं., ४३२.

2 'ताम्बूल:' शणः । केचित्तु 'मुञ्जकाशतासून्यो रशनाः' इति पठन्ति ।—'तासून:' शणः ।

3 अत्र वीरमित्रोदयव्याख्यानात् मूलमातृकास्थितिः ऊह्यते । यथा तत्र—"'मेखला' कटिवेष्टनरज्जुः । 'अश्मन्तकः' कुशसदृशतृणविशेष इति कल्पतरुः । 'बैल्वजा' बिल्वत्वग्निर्मिता । 'मूर्वा' तेजनी, मोरेति दाक्षिणात्यानां प्रसिद्धा । तन्निर्मिता रज्जुः 'मौर्वी' । अयं च विकल्पो यथाशाखं यथासंभवं द्रष्टव्यः ।" (सं., पृ. ४३१).

वैजवापः

मेखलां त्रैगुणां प्रसलविसृष्टां प्रदक्षिणं त्रिः परि-नयन्तीति।

'प्रसलं' प्रदक्षिणं यथा भवत्येवं 'सृष्टां' निर्मिताम्। 'परि' समन्तात् 'नयन्ति' 'प्रदक्षिणं' यथा भवति तथा 'त्रिः' वेष्टयन्ते।

## अथ दण्डः

तत्र भविष्यपुराणे

ब्राह्मणे बैल्वपालाशौ तृतीयः प्लक्षजस्तथा।
न्यग्रोधखादिरौ क्षत्रे तथाऽन्यो वेतसोद्भवः॥
पैलवौदुम्बरो वैश्ये तृतीयोऽश्वत्थजस्तथा।
दण्डानेतान् महाबाहो धर्मतोऽर्हन्ति धारितुम्[1]॥

[1]शङ्खः

पर्णपिप्पलबिल्वानां क्रमाद्दण्डाः प्रकीर्तिताः॥

'पर्णः' पलाशः।

[1]पैठीनसिः

औदुम्बरो खादिरो वारणो वा वैश्यस्य।

'वारणः' वरणवृक्षोद्भवः।

[पारस्करः[2]—२, ५, २५-२७]

पालाशो दण्डो ब्राह्मणस्य, बैल्वो राजन्यस्य, औदुम्बरो वैश्यस्य, सर्वे वा सर्वेषाम्।

1 वी. मि., सं., ४३५.
2 [पारस्करः] इति वी. मि. सं. ४३४; स्मृ. च., सं. ७७.

यमः

[[1]विप्रस्य दण्डः पालाशो बैल्वो वा धर्मतः स्मृतः।]
अश्वत्थो क्षत्रियस्याथ खादिरो वापि धर्मतः ॥
औदुम्बरोऽथ वैश्यस्य प्लक्षो वा दण्ड उच्यते ।

तथा

एतेषामप्यलाभे तु सर्वेषामेव यज्ञियाः ॥

मनुः—[२, ४६]

केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।
ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ॥

दण्ड इत्यनुवृत्तौ वसिष्ठः—[११, ५५–५७]

[2]घ्राणसंमितो ब्राह्मणस्य, ललाटसंमितः क्षत्रियस्य, केशसंमितो वैश्यस्य ।

विष्णुः—[२७, २१–२२]

पालाशखदिरौदुम्बराः दण्डाः केशान्तललाटनासादेशतुल्याः ।

पैठीनसिः

केशान्तललाटग्रीवाप्रमाणा ब्राह्मणादीनाम् ।

मनुः—[२, ४७]

ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।

1 [ ] स्मृतिचन्द्रिका संस्कारकाण्डे, पृ. ७७

2 "केशसंमितो ब्राह्मणस्य . . . घ्राणसंमितो वैश्यस्य" इति मुद्रितवासिष्ठे (ed., Fuehrer p. 32.)

15

अनुद्वेगकरा नृणां सत्वचो नाग्निदुःखिताः[1] ॥

<u>गौतमः</u>—[१, २७]

अपीडिता यूपवक्रास्सशल्काः ।

'अपीडिताः' वल्लीवेष्टनादिभिरनुपहताः । 'यूपवक्राः' यूपवदनताग्राः । 'सशल्काः' सवल्कलाः । असमासात्सर्व एवंरूपाः ।

<u>आपस्तम्बः</u>—[१, २, ३८]

नैयग्रोधस्कन्धजो ऽवाङ्ग्रो राजन्यस्य ।

## अथ गायत्र्युपदेशः

अथ <u>हारीतः</u>

तस्मादुपेतायोपसन्नाय समीक्षिताय समीक्षमाणाय ब्रह्मानुब्रुवन्ति नेतरेभ्यः, तान् ब्रह्मचारिण इत्याचक्षते ।

'ब्रह्मशब्दो' अत्र सावित्रीपरः ।

<u>पारस्करः</u>—[२, ३, ३–७]

अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय । दक्षिणतस्तिष्ठत आसीनाय वैके । पच्छोऽर्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन् । संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा । सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयात् [आग्नेयो वै ब्राह्मण इति श्रुतेः ।]

1 'दूषिताः' इति कुल्लूकपाठः.

'पच्छः' पादं पादं 'सर्वां च' 'तृतीयेन' पादेन सहानुवर्तयेत्[1]।

<u>यमः</u>

[2]ॐकारपूर्विकास्तिस्रः सावित्रीं यस्तु विन्दति।
चरति ब्रह्मचर्यं च स वै श्रोत्रिय उच्यते॥

'तिस्रो' महाव्याहृतीरिति शेषः।

<u>मनुः</u>—[२, ८०]

एतयर्चा विसंयुक्तः काले च क्रियया स्वया।
ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु[3]॥

## अथ भैक्षचर्या

<u>मनुः</u>—[२, ४८]

प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि॥

'उपस्थाय' संमुखमवस्थाय। 'परीत्य' परिवेष्ट्य[4]।

1 'पच्छ' इति पादं पादं पुनरर्धमर्धं तृतीयेन सर्वां सहानुवर्तयन्—इति कर्कः

2 वी. मि., सं. ४२९.

3 "संध्यायां अन्यत्र समये 'ऋचा' 'एतया' 'विसंयुक्तः' त्यक्तसावित्रीजपः स्वकीयया 'क्रियया' सायंप्रातर्होमादिरूपया स्वकाले त्यक्तो ब्राह्मणः क्षत्रियो वैश्योऽपि सज्जनेषु निन्दां गच्छति। तस्मात् स्वकाले सावित्रीजपं स्वक्रियां च न त्यजेत्—(कुल्लूकः)

4 'ईप्सितं' तत्तद्वर्णविहितम्। 'भास्करं' सौरैर्मन्त्रैः। 'उपस्थाय' संमुखमवस्थाय इति कल्पतरुः। अग्निं प्रदक्षिणीकृत्य। एतत्त्रयं भिक्षाचरणाङ्गतया विधीयते। (वी. मि., सं. ४८१).

तथा—[२, ४९]

भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम्[1] ॥

भविष्ये

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्।
भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत्[2] ॥
सुवर्णं रजतं रत्नं सा पात्रेऽस्य विनिक्षिपेत्।

'या चैनं नावमानयेत्' इति अन्यापीत्यर्थः। एतच्च 'प्रथमं' इत्युपक्रम्याभिधानात् ज्ञातिकुलान्वितान्यादिकाभिक्षानिषेधाच्चोपनयनप्रयोगान्तर्गतभिक्षाविषयम्। भिक्षेतेत्यनुवृत्तौ

पारस्करः [२, ५, ५–७]

तिस्रोऽप्रत्याख्यायिन्यः। षड्वा द्वादशपरिमिता वा। मातरं प्रथमामेके ॥

'अप्रत्याख्यायिन्य' इति द्वितीयास्थाने प्रथमा[3]।

शौनकः

आचरेत् सप्त भिक्षां क्षां च हिं च वर्जयेत्।

'क्षां च हिं च वर्जयेत्' इति लक्षणया भिक्षामिति दण्डादिवत् वर्जयेदित्यर्थः।

1 ब्राह्मणो 'भवति भिक्षां देहि' इति भवच्छब्दपूर्वं भिक्षां याचन् वाक्यमुच्चारयेत्। क्षत्रियो 'भिक्षां भवति देहि' इति भवन्मध्यम्। वैश्यो 'भिक्षां देहि भवति' इति भवदुत्तरम्—कुल्लूकः

2 मनुः (२, ५०). वी. मि., सं. ४८३.

3 'अप्रत्याख्यायिन्य' इत्यत्र द्वितीयार्थे प्रथमा—हरिहरः

तथा

सर्वेषु वर्णेषु, ब्राह्मणाद्याः सवर्णस्थाः ।

भिक्षेरन् इति शेषः ।

व्यासः[1]

ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्षमन्वहम् ।
सजातीयगृहेष्वेव सार्ववर्णिकमेव वा ॥

गौतमः—[२, ४२]

सार्ववर्णिकं भैक्षचरणमभिशस्तपतितवर्जम् ।

तथा—[२, ४४–४५]

आचार्यगुरुज्ञातिष्वलाभेऽन्यत्र । तेषां पूर्वं पूर्वं परिहरेत् ।

मनुः—[२, १८३]

वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।
ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥

'प्रशस्तानां स्वकर्मसु' सम्यक् स्वकर्मानुष्ठाननिष्ठानाम् ।

तथा—[२, १८४]

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥

अन्यत्रालाभे गुर्वादिषु भिक्षेत । तत्रापि पूर्वं पूर्वं विवर्जयेदुत्तरोत्तरालाभे ।

1 स्मृ. च., सं. (पृ. ११०.)

भविष्ये

सर्वं वा विचरेद्ग्रामं पूर्वोक्तानामसंभवे ।
[1]अन्त्यवर्जं महाबाहुरित्याह भगवान् विभुः ॥
वाचं नियम्य प्रयतः आमिषं चापि वर्जयेत् ।
चातुर्वर्ण्यं चरेद्भैक्षमलाभे कुरुनन्दन ॥

आपस्तम्बः—[१, ३, २५]

सर्वं लाभमाहरन् गुरवे सायं प्रातरमत्रेण भिक्षाचर्यं चरेत् ।

'सर्वं' निःशेषं निवेदयेदित्यर्थः । 'लाभं' लब्धम् । 'अमत्रेण' [कांस्यव्यतिरिक्तेन ताम्रादिपात्रेण ।] 'भिक्षाचर्यं चरेत्' कुर्वीत ।

यमः

हस्तदत्ता तु या भिक्षा व्यञ्जनं सलिलानि च ।
भुक्त्वा त्वशुचितां याति दाता स्वर्गं न गच्छति ॥

पैठीनसिः

भैक्षं चरेदप्रमत्तः शुचिः शान्तो जितेन्द्रियः ।

'अप्रमत्तः' अवहितः ।

भिक्षानुवृत्तिः

आपस्तम्बः—[१, ३, ३१-३५]

तत्समाहृत्योपनिधाय आचार्याय प्रब्रूयात् । तेन प्रदिष्टं भुञ्जीत । विप्रवासे गुरोराचार्यकुलाय । तद्विप्रवासेऽन्येभ्योऽपि श्रोत्रियेभ्यः । नात्मप्रयोजनश्चरेत् ॥

1. 'अन्त्यः' शूद्रः (वी. मि., सं. ४८२).

'प्रदिष्टं' अनुज्ञातम्। 'विप्रवासे' असंनिधाने। 'आचार्यकुलाय' आचार्यपुत्रादेः। 'नात्मप्रयोजनः' गुर्वादिभ्योऽनिवेदयन्। गुरुसमवाये अनेकगुरुसंनिधाने यमनुबद्धस्तस्मिन् काले तस्यादधीत इत्यर्थः।

तथा—[१, ७, १५–१८]

समावृत्तो मात्रे दद्यात्। माता भर्तारं गमयेत्। भर्ता गुरुम्। धर्मकृत्येषु योजयेत्॥

'समावृत्तः' विद्यां गृहीत्वा त्रिवृतो समावृत्त एव पितृगृहस्थितोऽत्राभिमतः।

गौतमः—[२, ४६–४८]

निवेद्य गुरवेऽनुज्ञातो भुञ्जीत। असंनिधौ तद्भार्यापुत्रसब्रह्मचारिसद्भ्यः। वाग्यतस्तृप्यन्नलोलुप्यमानः संनिधाप्योदकम्॥

'सब्रह्मचारी' सहाध्यायी। 'सद्भ्यः' साधुभ्यः।

मनुः—[२, ५१]

समाहृत्य तु तद्भैक्षं यावदन्नममायया।
निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः॥

[1]हारीतः

आहारशुद्धौ सत्वशुद्धिरित्याचार्याः। स द्विविधः। ऋतसंमितोऽमृतसंमितश्च। क्रोधदम्भसेवासंव्यवहारवर्जितं

1. 'हारीतः' इति मूलमातृकायां नोपलभ्यते। 'सत्वशुद्धिः' इति प्रतीकग्रहणमस्ति, व्याख्या तु नष्टा।

[ऋतसंमितम्]। [1]भैक्षमवोक्षितं पर्यग्निकृतं आदित्यदर्शितं गुरवे निवेदितमनुज्ञातममृतसंमितम्। प्रातस्तदश्नन् ब्रह्मचारी ब्रह्मसिद्धिमवाप्नोति ॥

'संव्यवहारः' मैत्र्यादि। 'पर्यग्निकृतं' परि सर्वतो अग्निः कृतो यत्र।

व्यासः

प्रक्षाल्य पाणिपादौ तु भुङ्क्त्वा चाप उपस्पृशेत्।

वसिष्ठः—[१२, १८–२०]

प्राङ्मुखोऽन्नानि भुञ्जीत। तूष्णीं साङ्गुष्ठं कृत्स्नग्रासं ग्रसेत्। न च शब्दं कुर्यात्।

पैठीनसिः

[2]हविषो हुत्वा संतर्प्याग्निं समिधं दत्वा अन्नं यदन्नमश्नामीत्युक्त्वानुमन्त्रयेत्। त्रिः स्विष्टकृतमग्निकार्यं कृत्वानुज्ञातो भुञ्जीत वाग्यतः प्राङ्मुखः इत्याह।

नात्युच्चैः सुखमासीत समदेहोऽन्नतत्परः।
कालेनाद्यंल्लघु क्षिप्रमल्पमद्यात् द्रवोत्तरम् ॥

'हविषः' भिक्षातो हविर्भूतस्यान्नस्य। 'द्रवोत्तरं' द्रवेण नक्तादिना भोजनसमाप्तिं कुर्यादित्यर्थः।

1 एतदारभ्यैव स्मृ. च., सं (पृ. ११३), वी. मि., सं (पृ. ४८७), इस्लांपूर्कर्-महाशयपरिष्कृतपराशरमाधवीये (I, ii. पृ. ४३) चोपलभ्यते।

2 अपरार्कस्तु पैठीनसिवाक्यमेवं पठति—

"हविषो हुत्वा संतर्प्याग्निं समिधं दत्वान्नं 'यदन्नमद्मयमृतेन देवा यदन्नमद्मि बहुधा विरूपम्' इति चोक्त्वानुमन्त्रयेत्। त्रिः स्विष्टकृतमग्निकार्यं कृत्वानुज्ञातो भुञ्जीत वाग्यतः ॥" इति।

हारीतः

प्राङ्मुखः आयुष्कामोऽश्नीयात्। यशोऽर्थी दक्षिणामुखः। श्रीकामः प्रत्यङ्मुखः। नात्याशयेत्। नासनेऽश्नीयात्। न कार्ष्णायसे। न मृत्पात्रे। नावकीर्णे॥

'नात्याशयेत्' नात्यशनं कुर्यात्। 'अवकीर्णे' अपवित्रे।

याज्ञवल्क्यः—[१, ३१]

कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया।
आपोशनक्रियापूर्वं सत्कृत्यान्नमकुत्सयन्॥

'हविषा हुत्वा' इत्यादिपैठीनसिवचनानुसारेण 'कृताग्निकार्य' इति तदेवात्राग्निकार्यं मतम्। 'सत्कृत्य' भूतानामुत्पत्तिस्थितिषु हेतुतया ध्यात्वा। 'अकुत्सयन्' अन्नदोषमकीर्तयन्।

तथा—[१, ३२]

ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि।
ब्राह्मणः काममश्नीयात् श्राद्धे व्रतमपीडयन्[1]॥

'एकमन्नं' एकभिक्षाम्। 'अनापदि' आपदि भिक्षास्थानाभावे [illegible]पे। 'श्राद्धे' [illegible]पे। 'व्रतमपीडयन्'

1 'एकं' एकस्वामिकमन्नं 'अनापदि' अन्नान्तरलाभसंभवे नाद्यात्। एकस्मिन् दिने यदीयमन्नं भुक्तं तदव्यवहितदिने तदीयमन्नं नाश्नीयादित्यर्थः। 'ब्राह्मणः' ब्राह्मणग्रहणं राज्ञश्चेत् ब्रह्मचारी तदा। श्राद्धे आमन्त्रितोऽभ्यर्थितः 'कामं' एकान्नमपि अश्नीयात् मधुमांसादिवर्जनेन 'व्रतं' ब्रह्मचारिनियमं अपीडयन्। ब्राह्मणग्रहणं राजन्यवैश्ययोः श्राद्धे भोजननिवृत्त्यर्थम्। तदाह श्राद्धभोजनमुपक्रम्य मनुः—

'राजन्यवैश्ययोश्चैव नैतत्कर्म प्रशस्यते' इति। 'कामं' इत्यनेनाकामानुमतिः विवक्षिता। तेन अभ्यर्थितस्य स्वेच्छया श्राद्धेऽप्येकान्नभोजनं व्यवच्छिन्नं, तत्पर एव स्मृत्यन्तरे ब्रह्मचारिणः श्राद्धभोजननिषेध इति स्मर्तव्यम्"। (याज्ञवल्क्यवीरमित्रोदयटीका, (पृ. ९४).

मधुमांसादि वर्जयन्। 'ब्राह्मणो' यथेष्टं 'अश्नीयात्', न क्षत्रियवैश्यौ।

राजन्यवैश्ययोश्चैव नैतत्कर्म विधीयते।

इति मनु—[२, १९०] वचनात्।

बौधायनः—[२, १, २५–२६]

स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भैषज्यार्थं सर्वं प्राश्नीयात्। येनेच्छेत्तेन चिकित्सेत[1]॥

'येन' इति ब्रह्मचारिनिषिद्धेन मधुमांसादिनापि गुरू-च्छिष्टेन।

वसिष्ठः[2]

अ‌ामापन्नं मधु वाजसनेयके न दुष्यति।

'अकामापन्नं' प्र‌‌ आपतितं भक्षितम्।

मनुः—[२, ५४–५५]

दृष्ट्वा ‌ष्येत्प्रसीदेच्च प्रतिनन्दे‌ सर्वशः।
पूजितं ह्यशनं नित्यं बलमूर्जं प्रयच्छति॥

'प्रसादः' क्रोधादिदोषहानेन मनसोऽनाकुलत्वम्। 'प्रतिनन्दनं' समृद्ध्याशंसनम्। 'बलं' सामर्थ्यम्। 'ऊर्जं' उत्साहम्।

1 "स यदि ब्रह्मचारी रोगेणाभिभूयेत 'कामं' तथा 'भैषज्यार्थं सर्वं' मधुमांसाद्यपि प्राश्नीयात्। तत्र व्रतावृत्तिः नास्ति गुरोरुच्छिष्टभोजनेऽपि। गुरोरपि यत्प्रतिषिद्धं लशुन-गृञ्जनादि तेनापि चिकित्सा कार्या"—(गोविन्दस्वामी)

2 स्मृ. च., सं. ११६.

ब्रह्मपुराणे

अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।
अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत् ॥

मनुः—[२, ५६]

नोच्छिष्टं कस्यचिद्दद्यात् नाद्याच्चैव तथान्तरा ।
न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद्व्रजेत् ॥

'अन्तरा' सायंप्रातःकालयोर्मध्ये इति मेधातिथिः ।

आपस्तम्बः—[१, ३, ३६–४५; १, ४, १–७]

भुक्त्वा स्वयममत्रं प्रक्षालयेत् । नोच्छिष्टं कुर्यात् । अशक्तौ भूमौ निखनेत् । अप्सु वा प्रवेशयेत् । आर्याय वा पर्यवदध्यात् । अन्तर्धिने वा शूद्राय । प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीत । भैक्षं हविषा सस्तुतं तत्राचार्यो देवतार्थे । आहवनीयार्थे च । तं भोजयित्वा । यदुच्छिष्टं प्राश्नाति । हविरुच्छिष्टमेव तत् । यदन्यानि द्रव्याणि यथालाभमुपहरति दक्षिणा एव ताः । स एष ब्रह्मचारिणो यज्ञो नित्यव्रतः । न चास्मै श्रुतिप्रतिषिद्धमुच्छिष्टं दद्यात् । यथा क्षारलवणमधुमांसानीति । एतेनान्ये नियमा व्याख्याताः ॥

'पर्यवदध्यात्' एकत्र भाजने कृत्वा समीपे धारयेत् । 'अन्तर्धिने' आचार्यदासाय । 'प्रोषितः' आचार्यप्रयोजनेनान्यत्र गतः । 'हविषा' हविष्ट्वेन । 'यदुच्छिष्टं' आचार्यो भोजयित्वोत्सृजति । 'न च' इति, यथा क्षारलवणादीनि श्रुतौ प्रतिषिद्धत्वान्न दीयन्ते एवं साक्षादुच्छिष्टम् ।

तथा

पितुः ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम्। धर्मविप्रतिपत्तावभोज्यम् ॥

'धर्मविप्रतिपत्तौ' अधार्मिकत्वे।

ग्राससंख्यां प्रक्रम्य

वसिष्ठापस्तम्बहारीतयमाः[1]

अपरिमितं ब्रह्मचारिणः।
अनड्वान् ब्रह्मचारी च आहिताग्निश्च ते त्रयः।
अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरनश्नताम् ॥

'अनडुद्'ग्रहणं दृष्टान्तार्थम्[2]।

गौतमः—[८, ५, ९]

सायं प्रातस्त्वन्नमभिपूजितमनिन्दन् भुञ्जीत[3]।

1 आप. ध. सू., २, ९, १२.
अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः।
द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः ॥
आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः।
अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरनश्नताम् ॥

वसिष्ठस्मृतिः (६, २०.)
अष्टौ ग्रासा मुनेर्भक्ष्या वानप्रस्थस्य षोडश।
द्वात्रिंशत्तु गृहस्थस्य अपरिमितं ब्रह्मचारिणः ॥

2 अनडुद्ग्रहणं दृष्टान्तार्थम्। ब्रह्मचारिग्रहणं दृढार्थम् (हरदत्तः)

3 'तु' शब्दो विशेषवाची। अन्नविशेषस्य विप्रतिषेधो न मोदकानामपीति। 'अभिपूजितं' नमस्कारः। अभिशब्दप्रयोगात् समन्त्रकमिति दर्शयति। 'अनिन्दन्' कदन्नत्वादिदोषेण अकुत्सयन् भुञ्जीत। (मस्करिः, पृ. १५२)

॥ ५ ॥

# अथाचमनम्

देवलः

भुक्त्वाचामेदथोक्तेन विधानेन समाहितः ।
शोधयेत् मुखहस्तौ च समृद्भिर्घर्षणैरपि ॥

तत्र मनुः—[१, ५३]

उपस्पृश्य द्विजो नित्यमन्नमद्यात्समाहितः ।
भुक्त्वा चोपस्पृशेत्सम्यगद्भिः [1]खानि च संस्पृशेत् ॥

गौतमः—[१, ३७–४१]

प्राङ्मुख उदङ्मुखो वा शौचमाचरेत् । शुचौ देश आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीत्या मणिबन्धात् पाणी प्रक्षाल्य वाग्यतो हृदयं स्पृशांस्त्रिश्चतुर्वा अप आचामेत् । [द्विः परिमृज्यात् । पादौ चाभ्युक्षेत् । खानि चोपस्पृशेच्छीर्षण्यानि ॥]

'वा' इति भावशुद्ध्यपेक्षया विकल्पः । मणिबन्धात्' कण्ठबाहुसंधिदेशात् । 'हृदयस्पृशः' हृदन्तर्गताः । 'खानि' इन्द्रियाणि । 'शीर्षण्यानि' शिरसि जातानि ।

1 खानि शीर्षण्यानि नयननासिकाकर्णानि—(मस्करिः, १, ४१)

हारीतः

आ मणिबन्धात् पाणी प्रक्षाल्य । आ जङ्घाभ्यां पादौ च । ज्ञातिश्रैष्ठ्यकामोऽन्नाद्यकामो वा दक्षिणे चरणाङ्गुष्ठे पाणिमवस्थाप्य प्राणानालभ्य खानि उपस्पृशेत् ।

देवलः

प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः ।
उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः ॥
शिखां बद्ध्वा वसित्वा द्वे निर्णिक्ते वाससी शुभे ।
तूष्णीं भूत्वा समाधाय नोद्गच्छन्न विलोकयन् ॥

'समाधाय' मन इति शेषः । 'उद्गच्छन्' उत्तिष्ठन् । 'विलोकयन्' दिश इति शेषः । 'दिशश्चानवलोकयन्' इति श[ङ्ख]वचनात् ।

तथा

न गच्छन्न शयानश्च न चलन्न परं स्पृशन् ।
न ह्लन्नैव संजल्पन् नात्मानं चापि वीक्षयन् ॥

'ह्लन्' कम्पमानः । 'आत्मानं' स्वहृदयम् । 'वीक्षयन्' इति चुरादिषु बहुलनिदर्शनात्स्वार्थे णिच् ।

केशान्नीवीमधःकायं न स्पृशन् धरणीमपि ।
यदि स्पृशति चैतानि भूयः प्रक्षालयेत्करम् ॥

'अधःकायं' नाभेरधःप्रदेशम् । 'न स्पृशन्' करेणेति शेषः ।

तथा

इत्येवमङ्घ्रिरा जानु प्रक्षाल्य चरणौ पृथक् ।

हस्तौ चा मणिबन्धाभ्यां पश्चादासीत संयतः ॥
अथापः प्रथमात्तीर्थाद्दक्षिणात्त्रिः पिबेत्समम् ।
अशद्बमनवस्रावमबहिर्जान्वबुद्बुदम् ॥

'प्रथमात्' ब्राह्मात्। 'अनवस्रावं' यथा न स्रवति तथा।

द्विस्तथाङ्गुष्ठमूलेन परिमृज्यात्पुनर्मुखम् ।
नाग्राङ्गुल्या न पृष्ठैर्वा परिमृज्यात्कथंचन ॥
ततः कृत्वाङ्गुलिस्पर्शं दृग्घ्राणश्रोत्रनाभिषु ।
मूर्धानं चरणौ चाद्भिः संप्रोक्ष्याथ शुचिर्भवेत ॥

'पृष्ठैः' अङ्गुलीपृष्ठहस्तैः ।

व्यासः

त्रिराचामेदपः पूर्वं द्विरुन्मृज्यात्ततो मुखम् ।
पादावभ्युक्ष्य मूर्धानमभ्युक्षेत्तदनन्तरम् ॥
अक्षिणी नासिके कर्णावोष्ठौ च तदनन्तरम् ।
ततः स्पृशेन्नाभिदेशं पुनरापश्च संस्पृशेत् ॥

विष्णुः [६२, ५]

[अनग्न्युष्णाभिरफेनिलाभिर्न शूद्रैकरवर्जिताभिरक्षाराभिरद्भिः शुचौ देशे स्वासीनोऽन्तर्जानुः प्राङ्मुखश्चोदङ्मुखो वा] तन्मनाः सुमनाश्चाचामेत् ।

'तन्मनाः' आचमनमनाः ।

नरसिंहपुराणे

दक्षिणं तु करं कृत्वा गोकर्णाकृतिवत् पुरा ।
त्रिः पिबेद्वीक्षितं तोयमास्यं द्विः परिमार्जयेत् ॥

भविष्यपुराणे

समौ च चरणौ कृत्वा तथा बद्धशिखो नृप।
अत्यन्तसुखितां चापि त्यक्त्वा राजन् सुदूरतः।

तथा

घनाङ्गुलिकरं कृत्वा एकाग्रः सुमना द्विजः॥
अङ्गुष्ठेन प्रदेशिन्या चालभेदक्षिणी नृप।
अङ्गुष्ठानामिकाभ्यां च नासिकामालभेन्नृप॥
मध्यमाभिर्मुखं नित्यं संस्पृशेत्कुरुनन्दन।
कनिष्ठिकाङ्गुष्ठकाभ्यां कर्णावालभते तु सः॥
अङ्गुलीभिस्तथा बाहुं अङ्गुष्ठेन तु मण्डलम्।
नाभेः कुरुकुलश्रेष्ठ शिरः सर्वाभिरेव तु॥

दक्षः—[२, २०, २२७]

अनेनैव विधानेन आचान्तः शुचितामियात्।
प्रक्षाल्य पादौ पाणी च त्रिः पिबेदम्बु वीक्षितम्॥

'अनेन' वक्ष्यमाणेन।

संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम्।
संहृत्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत्॥

'मुखं संवृत्य च ततः प्रमृज्यात्' इत्यन्वयः। 'एवं' इति संहृत्येत्यर्थः।

तथा—[२, २४-२६]

अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम्।
अङ्गुष्ठानामिकाभ्यां च चक्षुःश्रोत्रे पुनः पुनः॥
नाभिं कनिष्ठाङ्गुष्ठाभ्यां हृदयं तु तलेन वै।
सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत्॥

'प्रदेशिनी' तर्जनी। पूर्वमास्यं स्पृष्ट्वा पश्चाद्घ्राणं, अनन्तरं चक्षुषी, पुनः श्रोत्रे, पुनर्नाभिं स्पृशेदित्यन्वयः।

शङ्खः—[१०, ७-९]

तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम्।
अङ्गुष्ठमध्ययोगेन स्पृशेन्नेत्रद्वयं ततः॥
अङ्गुष्ठानामिकाभ्यां तु श्रवणे समुपस्पृशेत्।
कनिष्ठाङ्गुष्ठयोगेन स्पृशेत्स्कन्धद्वयं ततः॥
सर्वासामेव योगेन नाभिं च हृदयं तथा।
संस्पृशेच्च तथा शीर्षमयमाचमने विधिः॥

पैठीनसिः

अङ्गुष्ठेन प्रदेशिन्या नासिके संस्पृशेत्। अङ्गुष्ठानामिकाभ्यां च नेत्रे। कनीनिकाङ्गुष्ठाभ्यां श्रोत्रे। मध्यमिकया च मुखम्। अङ्गुष्ठेन च नाभिम्। सर्वाभिः शिरः। प्रदेशिनी वायुः, अनामिका सूर्यः, कनीनिका मघवा, मध्यमिका प्रजापतिः, अग्निरङ्गुष्ठः। तस्मात्तेनैव सह सर्वाणि स्थानानि स्पृशति। वायुः सूर्य इन्द्रः प्रजापतिरग्निरित्येता देवता एनं पुनीरन्निति।

तथा

नासिकां चक्षुषी श्रोत्रे मुखं नाभिं ततः शिरः।
स्पृष्ट्वा प्राणान् यथासंख्यं पादौ प्रोक्ष्य ततः शुचिः॥
सव्ये च पाणौ शेषा आपो निनयेत्॥

'प्राणान्' इन्द्रियाणि। 'यथासंख्यं' इति, यस्येन्द्रियस्य यावती संख्या तामनतिक्रम्येत्यर्थः।

शङ्खलिखितौ

त्रिः प्राश्य द्विः परिमृज्य शिरश्चक्षुः श्रोत्रं घ्राणं हृदयं चालभेत् ।

आपस्तम्बः—[१, १६, १–८]

तिष्ठन्नाऽऽचामेत् प्रह्वो वा । आसीनस्त्रिराचामेद् हृदयंगमाभिरद्भिः । त्रिरोष्ठौ परिमृजेत् । द्विरित्येके । सकृदुपस्पृशेत् । द्विरित्येके । दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाण्युपस्पृशेत् चक्षुषी नासिके श्रोत्रे च । अथाप उपस्पृशेत् ॥

तिष्ठन् प्रह्वो वा नाऽऽचामेदित्यर्थः । 'सकृदुपस्पृशेत् द्विरित्येके' ओष्ठाविति संबन्धः । 'सव्यं'पाणिमिति शेषः ।

हारीतः

प्राङ्मुखः प्रागुदङ्मुखो वोपविश्यान्तरूर्वोररत्नी कृत्वा त्रिरपो हार्दं पिबेत् । द्विः प्रमृज्यौष्ठौ सकृन्मूर्धानं चक्षुःश्रोत्रे नाभिं हृदयं पादौ चाभ्युक्ष्योपस्पृश्य प्रयतो भवति ।

शङ्खः—[९, १०–१३]

त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः ।
ब्रह्मा विष्णुश्च रुद्रश्च भवतीत्यनुशुश्रुम ॥
गङ्गा च यमुना चैव प्रीयेते परिमार्जनात् ।
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ।
स्पृष्टे लोचनयुग्मे तु प्रीयेते शशिभास्करौ ॥
कर्णयुग्मे तथा स्पृष्टे प्रीयेते त्वनिलानलौ ।
स्कन्धयोः स्पर्शनादेव प्रीयन्ते सर्वपर्वताः ॥

नाभिसंस्पर्शनान्नागाः प्रीयन्ते चास्य नित्यशः ।
संस्पृष्टे हृदये चास्य प्रीयन्ते सर्वदेवताः ॥
मूर्ध्नःसंस्पर्शनादस्य प्रीतस्तु पुरुषो भवेत् ।
'नासत्यदस्रौ' अश्विनौ ।
इन्द्रियस्पर्शानन्तरम्

**भविष्यपुराणे**

यद्भूमावुदकं वारि समुत्सृजति मानवः ।
वासुकिप्रमुखान्नागान् तेन प्रीणाति भारत ॥
विना यज्ञोपवीतेन तथा मुक्तशिखो द्विजः ।
अप्रक्षालितपादस्तु आचान्तोऽप्यशुचिर्भवेत् ॥
बहिर्जानुरुपस्पृश्य एकहस्तार्पितैर्जलैः ।
सोपानत्कस्तथा तिष्ठन्नैव शुद्धिमवाप्नुयात् ॥

**[देवलः]**

सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा नरः ।
उष्णीषी वापि नाचामेद्वस्त्रेणावेष्ट्य वा शिरः ॥
न शौचं वर्षधाराभिराचरेद्वेदतत्ववित् ।

**मरीचिः**

न बहिर्जानु त्वरया नासनस्थो न चोत्थितः ।
न पादुकास्थो नाचित्तः शुचिः प्रयतमानसः ॥
उपस्पृश्य द्विजो नित्यं शुद्धः पूतो भवेन्नरः ।
कृत्वासनस्थोऽप्याचामेन्नान्यकाले कदाचन ॥

**व्यासः**

शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥

[1]अपः पाणिनखाग्रेण आचामेद्यस्तु ब्राह्मणः।
सुरापानेन तत्तुल्यमित्येवमृषिरब्रवीत् ॥

[2]ब्रह्मपुराणे

कण्ठं शिरो वा प्रावृत्य [रथ्यापण]गतोऽपि वा।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥

'आपणः' क्रयविक्रयभूमिः।

बौधायनः—[१, ८, १०]

पादप्रक्षालनोच्छेषणेन नाचामेत्, यद्याचामेद्, भूमौ स्रावयित्वाऽऽचामेत्[3]।

'उच्छेषणेन' अवशिष्टेन।

आपस्तम्बः—[१, १५, ४–५]

न वर्षधारास्वाचामेत्। तथा प्रदरोदके। तप्ताभिश्चाकारणात्[4]।

'प्रदरः' स्वयं विदीर्णा भूमिः। 'अकारणात्' व्याध्यादिव्यतिरेकेण।

1 पराशरमाधवीये (I, i, ४२७) अत्रिः—

तोयं पाणिनखस्पृष्टं ब्राह्मणो न पिबेत् क्वचित्।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः ॥

तत्रैव (I, i, २०७) यमः—

अपः करनखस्पृष्टा या आचमति वै द्विजः।
सुरां पिबति स व्यक्तं यमस्य वचनं यथा ॥

2 पराशरमाधवीये (I, i, २४७) अपरार्कभाष्ये (पृ. ४२) च—'ब्रह्माण्डपुराणे' इति.

3 अन्योदकासंभवे भूमौ किञ्चिदुदकं विस्राव्य आचमनं कार्यमित्यर्थः (गोविन्दस्वामी).

4 "तस्मात् प्रदरोदकं नाचमेत्" इति तैत्तरीयब्राह्मणे.

अप आचामेदित्यनुवृत्तौ—

वसिष्ठः—[३, ३५–३६]

अद्भिरपि या गोस्तर्पणसमर्थाः स्युः। न वर्णरसदुष्टाभिर्याश्च स्युरशुभागमाः ॥

'अशुभागमाः' अशुभा गतयः। अशुभत्वं च गतेर्निन्दितदेशकालादिविशेषात् । 'वर्णरसदुष्टाः' द्रव्यान्तरसंसर्गदूषितरसवर्णाः।

'आचामेत्' इत्यनुवृत्तौ

शङ्खलिखितौ

उद्धृतपरिपूताभिरद्भिरवेक्षिताभिरक्षाराभिरनधिश्रिताभिरफेनाभिरबुद्बुदाभिः। न शूद्राशुच्येकपाण्यावर्जिताभिः॥

'परिपूताभिः' निरस्तापद्रव्याभिः। 'न शूद्राशुच्येकपाण्यावर्जिताभिः' इति सामान्येनैकपाण्यावर्जितेनाचमननिषेधात्। 'भूमिगतास्वप्स्वाचम्य प्रयतो भवति। यं वा प्रयत आचामयेत्' इत्यापस्तम्ब [१, १५, २–३] वचनेनावर्जने प्रयतपरनियमाच्च, स्वयमावर्जितेनाचमनं न शुद्धिहेतुरित्युक्तं भवतीति।

वसिष्ठः

कृत्वा चावश्यकर्माण्याचामेच्छौचवित्तमः।

तत इति प्रकृतत्वात् कमण्डलोरित्यन्वयः।

आपस्तम्बः—[१, ४, २०–२१]

नाग्न्युदकशेषेण वृथा कर्माणि कुर्वीताऽऽचामेद्वा। पाणिसंक्षुब्धेनोदकेनैकपाण्यावर्जितेन च नाचामेत् ॥

'अग्न्युदकशेषेण' अग्निपर्युक्षणाद्यर्थोपात्तोदकशेषेण,[1] 'वृथा' यतोऽतः 'कर्माणि' न कुर्वीतेत्यर्थः। 'संक्षुब्धेन' आलोडितेन।

याज्ञवल्क्यः—[१, २२] विष्णुः [६२, ९]

हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः।
शुद्ध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः॥

'अन्ततः' आस्यान्तरावयवे। अनेन चाभक्षणं विवक्षितम्।

त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम्।
शारीरं शौचमन्विच्छन् स्त्रीशूद्रं तु सकृत् सकृत्॥

इति [illegible]तमनु [५, १३९] वचनात्।

शुद्ध [illegible]

ब्रह्मपुराणे

स्त्री शूद्रो वाथ नित्याम्भःक्षालनाच्च करोष्ठयोः।

शूद्राधिकारे गौतमः [१०, ५२]

आचमनार्थे पादप्रक्षालनमेवैके।

'आचमनार्थे' आचमनरूपे प्रयोजने।

1 अग्निपरिचर्यायां परिसमूहने परिषेचने च यदुपयुक्तमुदकं तच्छेषेण 'वृथाकर्माणि' अदृष्टप्रयोजनरहितानि पादप्रक्षालनादीनि न कुर्वीत। 'पाणिसंक्षुब्धं' पाणिना संक्षोभितं तेनोदकेन नाऽऽचामेत्। इदं तटाकादिषु स्वयमाचमने। यदा पर आचामयति, तदैकेन पाणिना यदावर्जितं तेन नाऽऽचामेत्। किं तु उभाभ्यां हस्ताभ्यां करकादि गृहीत्वा यदावर्जितमुदकं, तेनैवाचामेत्। एवं च स्वयं वामहस्तावर्जितेनापि नाचामेत्। (इति हरदत्तः)

## आचमननिमित्तम्

आचमननिमित्तमित्यत्र तु—मन्वङ्गिरोबृहस्पतयः[1]

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानि च।
पीत्वापोऽध्येष्यमाणश्च आचामेत् प्रयतोऽपि सन्॥

आचमननिमित्तविषये तु वायुपुराणे[2]

निष्ठीवने तथाभ्यङ्गे तथा पादावसेचने।
[उच्छिष्टस्य च संभाषादशुच्युपहतस्य च॥
सन्देहेषु च सर्वेषु शिखां मुक्त्वा तथैव च।]
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत्॥
[उच्छिष्टस्यापि संस्पर्शे दर्शने चान्त्यजन्मनाम्।]

विष्णुः—[२२, ७५–७६]

क्षुत्वा सुप्त्वा भुक्त्वा भोजनाध्ययनेप्सुः पीत्वा स्नात्वा निष्ठीव्य वासः परिधाय रथ्यामाक्रम्य मूत्रपुरीषे कृत्वा पञ्चनखास्थ्यस्नेहं स्पृष्ट्वाचामेत्। चाण्डालम्लेच्छ-संभाषणे च।

ब्रह्मपुराणे

क्षुते श्लेष्मपरित्यागे पीते वा भक्षिते सति।
अवर्णस्य च संभाषे सुप्ते वा दन्तधावने॥
आचम्य प्रयतो भूत्वा ततः शुद्धो भवेन्नरः।

1 मनुस्मृतिः, ५, १४५; बृहस्पति, आचार., २.

2 आनन्दाश्रममुद्रितवायुपुराणे न सन्ति। शब्दकल्पद्रुमे, भा. १; पृ. १६७ श्लोकौ द्रष्टौ। ब्रह्माण्डपुराणात् एतौ उद्धृतौ अपरार्केण (पृ. २७९.) वायुपुराणादुद्धृताः इमे श्लोकाः आह्निकतत्त्वे (पृ. ३३९.)

'धीते' पीते। 'धेट् पाने' इत्यस्य निष्ठायां रूपम्। 'अवर्णो' अत्र चाण्डालादिः।

शङ्खः

कृत्वा मूत्रं पुरीषं च स्नात्वा भोक्तुमनास्तथा।
भुक्त्वा क्षुत्वा तथा सुप्त्वा पीत्वा चाम्भोऽवगाह्य च॥

आचमनविध्यनन्तरम्—

देवलः

रेतोमूत्रशकृन्मोक्षे भोजनेऽध्वपरिश्रमे।
शौचमेवंविधं प्रोक्तमीषद्वान्यत्र दृश्यते॥

यैराचमनाङ्गैर्विना 'आचान्तोऽथ शुचिर्भवेत्' इत्युक्तम्, तदिराङ्गत्यागेनापि 'रेतोमूत्र' इत्याद्युक्तनिमित्तादन्यत्राचमने किंचिदङ्गत्यागेनापि तथाविधं संपद्यते।

[तथा]

उच्छिष्टं मानवं स्पृष्ट्वा भोज्यं वापि तथाविधम्।
तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुद्ध्यति॥

'तथाविधं' उच्छिष्टम्।

तथा

यदम्भः शौचनिर्मुक्तं क्षितिं प्राप्य विनश्यति।
प्रक्षाल्याशुचिलिप्तं च स्पृष्ट्वा वाचम्य शुद्धति॥

'शौचनिर्मुक्तं' शौचपाणीयामत्रात्क्षिप्तं, तत्स्पृष्ट्वा, तत्संबन्धाद्भूमिमार्द्रां स्पृष्ट्वा, तथा 'प्रक्षाल्याशुचिलिप्तं च' अशुचिलिप्तमङ्गं प्रक्षाल्य च, स्पृष्ट्वा च तथैवाचम्य शुध्यतीत्यर्थः।

आपस्तम्बः—[१, १५, २३]

मूत्रं कृत्वा पुरीषं वा मूत्रपुरीषलेपानन्नलेपा[illegible]च्छेष-[लेपान् रेतसश्च ये] लेपास्तान् प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ।

'अन्नलेपान्' अन्नमयोद्वर्तनादिकृतलेपान् । 'उच्छेषं' उच्छिष्टम् ।

पैठीनसिः

उच्छिष्टरेतोमूत्रं संस्पृश्योन्मृज्याचम्य प्रयतो भवति त्रिः प्रक्षाल्य च तं देशम् ।

'देशं' उच्छिष्टादिलिप्तम् ।

आचमने वक्ष्यमाणे—

हारीतः

रथ्यामाक्रम्य सुषुप्सुः कृत[illegible]पुरीषो भ[illegible] पाणिं पादं प्रक्षाल्याऽऽचामेत् ।

आपस्तम्बः—[१, १६, १४-१५]

स्वप्ने क्षवथौ शिङ्घाणिकाश्र्वालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं च गत्वामेध्यं चोपस्पृ[illegible]ं च मनुष्यं नीवीं च परिधायाप उपस्पृशेत् । आर्द्रं वा शकृदोषधीर्भूमिं वा ॥

'शिङ्घाणिकाश्रु' नासिकानिर्गतः श्लेष्मा नेत्रजलं च, [तयोः 'आलम्भे' स्पर्शे । अत्राग्निगो-]ब्राह्मणानां स्पर्शे यदाऽऽचमनं तद्विहितस्पर्शेतरस्पर्शमात्रनिमित्तिकं न तु

तत्स्पर्शजन्याप्रायत्यनिमित्तकम् । 'महापथो' राजमार्गः । 'नीवीं परिधाय' ग्रन्थिं कृत्वेत्यर्थ[1]: ।

बौधायनः—[१, १०, १७]

नीवीं विस्रंस्य परिधायाप उपस्पृशेत्। आर्द्रं तृणं गोमयं भूमिं वा समुपस्पृशेत् ॥

'विस्रंस्य' मुक्त्वा ।

[2]आपस्तम्बः—[१, १५, ७-११]

रिक्तपाणिर्वयस उद्यम्याप उपस्पृशेत्। शक्तिविषये न मुहूर्तमप्यप्रयतः स्यात्। नग्नो वा। नाप्सु सतः प्रयमणं विद्यते। उत्तीर्य त्वाचामेत् ॥

'रिक्तपाणिना' लोष्टादिरहितपाणिना। 'वयसे' पक्षिणे। 'उद्यम्य' उत्क्षिप्य। प्रक्रमात्पाणिमिति शेषः। 'प्रयमणं' प्रायत्यं शौचमिति यावत्।

यमः

उत्तीर्योदकमाचम्य अवतीर्य उपस्पृशेत्।
एवं स्याच्छ्रेयसा युक्तो वरुणश्चैव पूजितः ॥

'उत्तीर्य' निष्क्रम्य। 'अवतीर्य' प्रविश्य।

1 "केषुचित् स्नानं, केचिदाचमनं, केषुचित् स्पर्शनमात्रं यावता प्रयतो मन्यते"। (हरदत्तः)

2 "पक्षिणः प्रोत्सारणाय यो 'रिक्तपाणिना' काष्ठलोष्टरहितपाणिं उद्यच्छते, स तत्कृत्वा तेनैव पाणिना अप उपस्पृशेत्। काष्ठलोष्टादिसहितस्य पाणेः उद्यमने न दोषः"। (हरदत्तः)

जलमित्यनुवृत्तौ—

हारीतः

नोत्तरेदनुपस्पृश्य ।

'उत्तरेत्' सन्तरेत् ।

पैठीनसिः

अन्तरुदक आचान्तोऽन्तः शुद्धो भवति। बहिरुदक आचान्तो बहिरेव शुद्धः स्यात्। तस्मादन्तरेकं बहिरेकं च कृत्वा पादमाचामेत्, सर्वत्र शुद्धो भवति ।

पाराशरः—[१२, १९–२१]

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ।
पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत् ॥
[1]प्रयागादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः ॥
आदित्यो वरुणः सोमो अग्निर्वायुस्तथैव च ।
विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ॥

[2]अयं च मुख्याचमनासंभवेऽनुकल्पः ।

आपस्तम्बः—[१, १६, १०—१३]

श्यावान्तपर्यन्तावोष्ठावुपस्पृश्याचामेत्। न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये सद्भिर्यावन्न हस्तेनोपस्पृशति। य

1 माधवनन्दपण्डितधृतपाठः—

प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ।
विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ॥
अग्निरापश्च वेदाश्च सोमसूर्यानिलास्तथा ।

2 आचमनप्रतिनिधित्वेन श्रोत्रस्पर्शः (माधवः)

आस्याद्बिन्दवः पतन्त उपलभ्यन्ते तेष्वाचमनं विहितम्। ये भूमौ न तेष्वाचामेदित्येके ॥

'श्यावान्तपर्यन्तौ' विलोमकौ।

मार्कण्डेयपुराणे—[३४, ६९-७२]

क्षुत्वा निष्ठीव्य वासश्च परिधायाचमेद्बुधः।
[1][क्षुतेऽवलीढे वान्ते च तथा निष्ठीवनादिषु।]
कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम्।
कुर्वीतालम्बनं चापि दक्षिणश्रवणस्य वै ॥
यथाविभवतो ह्येतत्पूर्वाभावे ततः परम्।
न विद्यमाने पूर्वोक्ते उत्तरप्राप्तिरिष्यते ॥

## अथ द्विराचमननिमित्तानि

तत्र आपस्तम्बः—[१, १६, ९]

भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत्, द्विः परिमृजेत्सकृदुपस्पृशेत्।

एतच्च भोक्ष्यमाणस्यैव नियतं सकृदोष्ठपस्पर्शनम्। 'सकृद्' न द्विः। परिमार्जनेऽपि द्विरेव इति व्यवस्था।

व्यासः

प्रक्षाल्य पाणिपादौ च भुञ्जानो द्विरुपस्पृशेत्।

याज्ञवल्क्यः—[१, १९६]

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे।

1 श्लोकार्धः मूलमातृकायां नास्ति, मुद्रितमार्कण्डेयपुराणादुद्धृतश्च।

आचान्तः पुनराचामेद्वासो विपरिधाय च ॥

शङ्खलिखितौ

मूत्रपुरीषनिष्ठीवनादिषु शुक्तवाक्याभिधानेषु पुनः पुनरुपस्पृशेत् ।

'शुक्तं' परुषम् ।

पैठीनसिः

कलिलकासश्वासागमे रथ्याचत्वरश्मशानक्रान्तेष्वाचान्तः पुनराचामेत् ।

'कलिलं' कठिनश्लेष्मा । 'श्वासो' अत्र विकृतो व्यायामादिकृतः । 'चत्वरं' भूतादीनां बलिदानस्थानम् ।

## अथाचमनापवादः

तत्र मनुः—[५, १४१]

नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गं न यन्ति याः ।
न श्मश्रूणि गतान्यास्यं न दन्तान्तरधिष्ठितम् ॥

'मुख्याः' मुखे भवाः । 'यन्ति' गच्छन्ति । 'श्मश्रूणि' मुखलोमानि । 'आस्यं गतानि' मुखं प्रविष्टानि । 'दन्तान्तः' दन्तमध्ये । 'अधिष्ठितं' प्रविष्टम् ।

गौतमः—[१, ४४]

दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्शनात् ।
यावज्जिह्वायां दन्तेभ्यो भेदेन नोपलभ्यन्त इत्यर्थः ।

तथा—[१, ४५]

प्राक् च्युतेरित्येके ।

सत्यपि जिह्वाभिमर्शने यावन्न च्यवते तावच्छुचिरित्येके मन्यन्ते ।

तथा—[१, ४६]

च्युतेष्वास्रावबद्विद्यान्निगिरन्नेव तच्छुचिः ।

देवलः[1]

भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् ।
दन्तलग्नमसंहार्यं लेपं मन्येत दन्तवत् ॥
न तत्र बहुशः कुर्याद्यत्नमुद्धरणे पुनः ।
भवेच्चाशौचमत्यन्तं तृणवेधाद्व्रणे कृते ॥

वसिष्ठः—३, ३९]

न च श्मश्रुगतो लेपः ।

'अशुचिः' इति शेषः ।

तथा—[३, ४०]

दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत् ।
आचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः ॥

'आचान्तस्य' यदवशिष्यते प्रमादात् तन्निगिरन्नेव शुचिर्भवति ।

पैठीनसिः

भूमिगता बिन्दवः परामृष्टाः पूता विप्रुषः शुद्धा द्विरोमक्लिन्नेष्वाचामेत् ।

'बिन्दवः' अत्र आचमनबिन्दवः । 'परामृष्टाः' स्पृष्टाः । 'पूताः' नाप्रायत्यमापादयन्ति । अङ्गपतिता अपि

1 पराशरमाधवीय, I, i., २४३.

रोमद्वयार्द्रीभावमापादयितुं समर्था एव आचमननिमित्तं भवन्ति ।

याज्ञवल्क्यः—[१, १९५]

मुखजा विप्रुषो मेध्यास्तथाचमनबिन्दवः ।
श्मश्रु चास्यगतं दन्तश्लिष्टं त्यक्त्वा ततः शुचिः ॥

मनुः—[५, १४१]

स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ।
भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥

अत्र्यङ्गिरसौ[1]

मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
नोच्छिष्टस्तु भवेद्विप्रो यथात्रेर्वचनं तथा ॥

'अप्सु' इति प्राणाहुतिसाहचर्यप्राप्तापोशानविषयम्, आचमनमध्ये उदकपानविषयं वा । अन्यत्रोदकपाने 'पीत्वापोऽध्येष्यमाणश्च' इत्याचमनविधेः ।

पराशरः—[७, ३३]

ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने ।
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत्[2] ॥

1 अपरार्कः, पृ. २७७—'अत्रिः' इति—"मधुपर्कादिषु उच्छिष्टस्य । मन्त्रोच्चारविषयमेतत् । आचमनं तु सोमादन्यत्र कार्यमेव । 'न सोमेनोच्छिष्टा भवन्ति' इति श्रुतिस्तन्निवर्तिका" । (पृ. २७७) याज्ञवल्कीयवीरमित्रोदये तु 'इत्यङ्गिरोवचनात्' इति दृश्यते (पृ. २७२).

2 'धर्मतो विदः' इति माधवाचार्यनन्दपण्डितधृतपाठः । परं नन्दपण्डितः स्वविद्वन्मनोहराख्यव्याख्यायां 'इति मन्वादयो विदुः' इति पठति । पाराशरीये पूर्वार्धावसानं "नोच्छिष्टं मनुरब्रवीत्" इति ।

[1]शातातपः

दन्तलग्ने फले मूले भक्ष्ये स्नेहे तथैव च ।
ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः ॥

'फले' कटुतिक्तकषाये जातीफलादौ, सतामाचारात् ।

मुखशुद्धिसाधने—

वसिष्ठः—[३, ४२]

प्रचरन्नभ्यवहार्येषु उच्छिष्टं यदि संस्पृशेत् ।
भूमौ निक्षिप्य तत्पात्रमाचम्य प्रचरेत्पुनः ॥

'उच्छिष्ट'शब्दोऽत्राचमनार्हाशुचिविषयः । स्नानाद्यर्हाशुचिवचनत्वे त्वाचमनमात्रविधिविरोधात् ।

शङ्खलिखितौ

द्रव्यहस्त उच्छिष्टो निधायाचम्याभ्युक्षेद्द्रव्यम् ।

एतच्चाभ्यवहार्यद्रव्यविषयम् ।

यत्तु—

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथंचन ।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥

इति [2]मनु [५, १४३] वचनम्, तदभ्यवहार्यान्नव्यञ्जनव्यतिरिक्तद्रव्यहस्तविषयमिति [3]विश्वरूपभर्तृयज्ञौ ।

1 मिताक्षरायां (१, १९५)—यथाह शातातपः—

ताम्बूले च फले चैव भुक्ते स्नेहावशिष्टके ।
दन्तलग्नस्य संस्पर्शे नोच्छिष्टो भवति द्विजः ॥

2 मनु, ५, १४३ । 'अनिधायैव' इति कुल्लूकपाठः ।

3 विश्वरूपः (१, १९५) यथा—उच्छिष्टाचेतनद्रव्यस्पृष्टिस्पर्शेऽदोषः । अपुरुषप्राणिनां च निर्दोषतैव । See elaborate discussion of impurity and purification in the *Bālakrīdā* of Vis'varūpa (I, pp. 133-138).

बौधायनः—[१, ८, २२-२६]

तैजसं चेदादायोच्छिष्टी स्यात् तदुदस्याचम्यादास्य-न्नद्भिः प्रोक्षेत। स चेदन्येनोच्छिष्टी स्यात्तदुदस्याचम्या-दास्यन्नद्भिः प्रोक्षेत। अथ चेदद्भिरुच्छिष्टी स्यात्तदुदस्याच म्यादास्यन्नद्भिः प्रोक्षेत। एतदेव विपरीतममत्रे। वान पत्ये च विकल्पः॥

'अन्येनोच्छिष्टी स्यात्' अन्येनोच्छिष्टेनोच्छिष्टः। 'अद्भिः' आचमनोदकपानादौ। 'एतदेव' आदानापेक्षं चात्र विपरीतत्वम्। तत् 'उदस्य' परित्यज्य 'आचामेत्' न पुनस्तद्गृह्णीयादित्यर्थः।

बृहस्पतिः—[आचार ६-८, पृ. ३१०]

प्रचरन् स्वान्नपानेषु यदोच्छिष्टमुपस्पृशेत्।
भूमौ निधाय तद्द्रव्यमाचान्तः प्रचरेत्पुनः॥
अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि।
कृत्वा मूत्रपुरीषं च द्रव्यहस्तो न दुष्यति॥
शौचं तु कुर्यात्प्रथमं पादौ प्रक्षालयेत्ततः।
उपस्पृश्य तदभ्युक्ष्य गृहीतं शुचितामियात्॥

॥ ६ ॥

# अथ शौचम्

## तत्र शौचादिशिक्षा

[1]मनुशङ्खौ

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।
आचारमग्निकार्यं च संध्योपासनमेव च ॥

याज्ञवल्क्यः—[१, १५]

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥

'आचारः' गुर्वभिवादनादिः ।

## विण्मूत्रोत्सर्गः

विष्णुपुराणे—[३, ११, १२-१५]

[न कृष्टे सस्यमध्ये वा गोव्रजे जनसंसदि ।
न वर्त्मनि न नद्यादितीर्थेषु पुरुषर्षभ ॥
नाप्सु नैवाम्भसस्तीरे श्मशाने न समाचरेत् ।
उत्सर्गं वै पुरीषस्य मूत्रस्य च विसर्जनम् ॥

1 मनु., २, ६९.

उदङ्मुखो दिवा मूत्रं विपरीतमुखो निशि ।
कुर्वीतानापदि प्राज्ञो मूत्रोत्सर्गं च पार्थिव ॥
तृणैरास्तीर्य वसुधां वस्त्रप्रावृतमस्तकः[1] ।]
तिष्ठेन्नातिचिरं तत्र नैव किंचिदुदीरयेत् ॥

याज्ञवल्क्यः—[१, १५४]

दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ।

मनुः—[४, १५१]

दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ।
उच्छिष्टान्नं निषेकं च दूरादेव समाचरेत् ॥

'निषेकः' उच्छिष्टद्रव्यप्रक्षेपः[2] ।

आपस्तम्बः—[१, ३१, २]

आराच्चावसथान्मूत्रपुरीषे कुर्याद्दक्षिणां दक्षिणापरां वा ।

'गत्वा' इत्यध्याहार्यम् । 'दक्षिणापरा' नैऋती ।

पुनः आपस्तम्बः—[१, ३१, ३]

[3]अस्तमिते च बहिर्ग्रामादाराच्चावसथान्मूत्रपुरीषयोः कर्म वर्जयेत् ।

'आरात्' दूरे ।

1 मूलमातृकायां त्रुटितश्लोकाः पुनरुद्धृताः ।

2 'निषेकः' उच्छिष्टद्रव्यप्रक्षेप इति कल्पतरुः । तन्मते 'उच्छिष्टान्नं' उच्छिष्टान्नत्यागमित्यर्थः । कुल्लूकभट्टस्तु 'निषिच्यत' इति निषेकं रेतः समाचरेत् इति व्याख्यातवान् । (वी. मि., आह्निक., पृ. २३).

3 "दृष्टार्थोऽयं प्रतिषेधः । तेन चोरव्याघ्रादिरहिते देशे रात्रौ बहिर्गमनेऽपि न दोषः" । (वी. मि., आह्नि., पृ. २३).

<u>मनुः</u>—[४, ४९]

तिरस्कृत्योच्चरेत्काष्ठं पत्रं लोष्टं तृणानि वा।
नियम्य प्रयतो वाचं संवीताङ्गोऽवगुण्ठितः॥

'तिरस्कृत्य' अन्तर्धाय। 'प्रयतः' शुचिः। 'वाचं नि॰ म्य' इत्यन्वयः। 'संवीतं' निवीतम्। 'संवीतं मानुषं' इति <u>तैत्तिरीयश्रुतेः</u>। तदङ्गे यस्य 'संवीताङ्गः'।

<u>बौधायनः</u>—[१, १०, १०]

शुष्कं तृणमयाज्ञिकं काष्ठं लोष्टं वा तिरस्कृत्याहोरात्रयोरुदग्दक्षिणामुखः प्रावृत्योच्चरेत् अवमेहेद्वा।

'अयाज्ञिकं' यज्ञप्रयोजनककुशपलाशादिव्यतिरिक्तम्। 'अवमेहेत्' मूत्रं कुर्यात्।

'विण्मूत्रोत्सर्गं कुर्यात्' इत्यनुवृत्तौ—

<u>वायुपुराणे</u>

शुष्कैस्तृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन वा।
मृन्मयैर्भाजनैर्वापि अन्तर्धाय वसुंधराम्॥

कमण्डल्वधिकारे—

<u>बौधायनः</u>—[१, ७, ३]

मूत्रपुरीषे कुर्वन् दक्षिणे हस्ते गृह्णाति सव्ये आचमनीयम्[1]।

1 बौधायनेऽपि (१, ७, १)—

कमण्डलुर्द्विजातीनां शौचार्थं विहितः पुरा।
ब्रह्मणा मुनिमुख्यैश्च तस्मात्तं धारयेत्सदा॥

हारीतः

घ्राणास्ये वाससा वेष्टयित्वा मृद्धात्रीं ग्रीवायामासज्य दक्षिणबाहुपार्श्वे कमण्डलुमाधायोत्सृजेत् ।

['मृद्धात्रीं' मृद्धारणपात्रीम् । 'कमण्डलुं' शौचार्थजलपूर्णं पात्रम् । 'उत्सृजेत्'] उत्सर्गं कुर्यात् । मूत्रपुरीषे इति शेषः ।

यमः

शिरः प्रावृत्य कुर्वीत शकृन्मूत्रविसर्जनम् ।
[अयज्ञियैरनार्द्रैश्च तृणैः संछाद्य मेदिनीम् ॥]

सांख्यायनगृह्यः[1]

यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा । नादित्याभिमुखो न जघनेन । अहरुदङ्मुखो नक्तं दक्षिणामुखः ॥

'न जघनेन' इति अत्यन्तं नम्रतया स्वस्यैव प्रसक्तं जघनसामुख्यं निषिध्यते । मध्याह्ने दक्षिणामुखः ।

देवलः

सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः ।
विण्मूत्रमुत्सृजेन्नित्यं संध्यासु परिवर्जयेत् ॥

अत्रेयं व्यवस्था—देवलवचनानुसारात् प्रातःसायंकालयोः त्रिमुहूर्तात्मकयोः उदग्दक्षिणामुखत्वम् । एवं च

ततः शौचं ततः पानं सन्ध्योपासनमेव च ।
निर्विशङ्केन कर्तव्यं य इच्छेच्छ्रेय आत्मनः ॥

अत्र गोविन्दस्वामी—"कमण्डलूदकेन शौचं अपानदेशमलनिर्हरणादिकम् । पानसन्ध्योपसने दृष्टादृष्टकार्योपलक्षणार्थम् ॥" (पृ. ३१).

1 वी. मि., आह्नि., २७

[1]यमवचनं तदतिरिक्ते पूर्वाह्णे अपराह्णे च प्रत्यक्प्राङ्मुखताप्रापकम्[2]।

आपस्तम्बः—[१, ३१, १]

प्राङ्मुखोऽन्नानि भुञ्जीत [3]उच्चरेद्दक्षिणामुखः।
उदङ्मुखो मूत्रं कुर्यात्प्रत्यक्पादावसेचनम्॥

'उच्चरेद्दक्षिणामुख' इति रात्रिसायाह्नविषयम्। यमदेवलवचनात् प्रत्यक्पश्चिमाभिमुखं भवति। इदं च वचनं संध्याकालव्यतिरिक्तकालविषयम्।

हारीतः

उभे संध्ये उदङ्मुखः।

मनुः—[४, ५१]

छायायामन्धकारे वा रात्रावहनि वा द्विजः।
यथासुखमुखः कुर्यात्प्राणबाधाभयेषु च॥

छायान्धकारयोः प्राणपीडायां व्याघ्रादिभये च दिङ्मुखनियमोऽनादेयः इत्युक्तम्।

1 यमः—प्रत्यङ्मुखस्तु पूर्वाह्णेऽपराह्णे प्राङ्मुखस्तथा।
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः॥

"एवं तर्हि यमोक्तयोः प्राक्-प्रत्यङ्मुखत्वयोः का गतिः? सूर्याभिमुखनिषेधगमकोक्तिरिति ब्रूमः"। (पराशरमाधवीये, I, i, २२३) अपि च—"अत्र केचिद् विकल्पमाश्रित्य व्यवस्थापयन्ति। तदयुक्तम्। सामान्यविशेषशास्त्रयोः विकल्पाभावात्। सामान्यशास्त्रं तु याज्ञवल्क्यवचनम् (१, १६)—[दिवा सन्ध्यासु कर्णस्थ ब्रह्मसूत्र उदङ्मुखः। कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः॥] यमवचनन्तु विशेषशास्त्रम्"। (पृ. २२३)

2 अत्र यमवचनं दिवसस्य त्रिधा विभागाभिप्रायकं, देवलवचनं च पञ्चधा विभागाभिप्रायकं इति कल्पतरुकारस्य आशयः (वी. मि., आह्नि., २९).

3 'उच्चारः' पुरीषकर्म।

पुनः **मनुः**—[४, ४५]

> न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ।
> न फालकृष्टे न जले न चित्यां न च पर्वते ॥

'चित्यां' अग्निचयनस्थाने ।

**तथा**—[४, ४६–४८]

> न जीर्णदेवायतने न वल्मीके कदाचन ।
> न ससत्वेषु गर्तेषु न गच्छन्नापि च स्थितः ॥
> न नदीतीरमासाद्य न च पर्वतमस्तके[1] ।
> वाय्वग्निविप्रमादित्यमपः पश्यंस्तथैव गाः ॥
> न कदाचन कुर्वीत विण्मूत्रस्य विसर्जनम् ।

'न च पर्वत' इति पर्वतनिषेधकेन पर्वतमस्तकनिषेधे सिद्धेऽपि पुनस्तन्निषेधो दोषभूयस्त्वार्थः। 'वायुं पश्यन्' संमुखमुपलभमानः ।

**देवलः**

> [2]वापीकूपनदीगोष्ठचैत्याम्भःपथिभस्मसु ।
> अग्नौ काम्ये श्मशाने च विण्मूत्रं न समाचरेत् ॥

1 "पर्वतग्रहणं अरण्योद्यानोपलक्षणार्थम् । तथा हि विशेषप्रतिषेधो भवति 'पर्वतमस्तक' इति । सामान्येन प्रतिषेधे पर्वतवासिनाममेहनप्रसङ्गः" इति **मेधातिथिः** । "न पर्वतमस्तके इति पुनर्ग्रहणं दोषाधिक्यज्ञापनाय" इति **माधवाचार्यः** (पृ. २२५)। 'पर्वतनिषेधादेव तच्छृङ्गनिषेधे सिद्धे पुनः पर्वतश्रृङ्गनिषेधः तदितरपर्वते विकल्पार्थः' इति **कुल्लूकः** । "न च पर्वते इत्यनेन पर्वतमस्तकनिषेधे सिद्धेपि पुनः तन्निषेधो दोषभूयस्त्वार्थ इति **कल्पतरुः** । पर्वतनिषेधादेव पर्वतमस्तकनिषेधे सिद्धे पुनस्तन्निषेधः पर्वतस्याभ्यनुज्ञानार्थः । तेन यत्र पर्वतोऽशक्यपरिहारः तत्र पर्वते न निषेध इति **पारिजात-कुल्लूक-भट्टश्रीदत्त-स्मृतिचन्द्रिकाकाराद्यभिप्रायः** ॥ (वी. मि., आह्नि. पृ. ३३).

2 अत्र वाप्यादित्रयं जलरहितवाप्यादिपरं, अम्भसः पृथगुपाधानात् । (**वी. मि., आह्नि. ३४**).

'चैत्यः' ग्रामप्रसिद्धो वृक्षः। 'काम्यः' कमनीयः प्रदेशः उद्यानादिः।

यमः

[1]पल्वलानि तडागानि नदीप्रस्रवणानि च।
नगगोमयभस्मानि फालकृष्टं च वर्जयेत्॥

'पल्वलं' अल्पसरः। 'तडागं' कृत्रिमसरः।

तथा

[2]तुषाङ्गारकपालानि देवतायतनानि च।
राजमार्गश्मशानानि क्षेत्राणि च खलानि च॥
उपरुद्धो न सेवेत छायां दृश्यं चतुष्पथम्।

'दृश्यं' शोभनम्।

तथा

उदकं चोदकान्तं च पन्थानं च विवर्जयेत्।
वर्जयेद्वृक्षमूलानि चैत्यश्वभ्रबिलानि च॥

'पन्थानं च विवर्जयेत्' इत्यनेनैव राजमार्गचतुष्पथयोर्निषेधे सिद्धे पुनस्तयोरुपादानं दोषाधिक्यज्ञापनार्थम्।

हारीतः

न चत्वरोपद्वारयोर्मूत्रपुरीषे कुर्यात्। न तीर्थे। न सस्यपूर्णे। न यज्ञभूमौ। न यज्ञियानां वृक्षाणामधस्तात्॥

1 'प्रस्रवणं' वारिप्रवाहः। पल्वलादिपदचतुष्टयं निरुदकतत्प्रदेशग्रहणार्थं अधिकदोषख्यापनार्थं वा उदकस्य पृथगुपादानात्। 'नगः' पर्वतः। 'कपालं' घटाद्येकदेशः, शिरोस्थि वा। 'खलं' सस्यमर्दनदेशः। 'उपरुद्धो' मूत्रपुरीषोत्सर्गकारी। 'छायां' पथिकाद्युपजीव्याम्। 'दृश्यं' शोभनम्। 'पन्थानं वर्जयेत्' इत्यनेनैव राजमार्गचतुष्पथयोर्निषेधे सिद्धे, पुनस्तयोरुपादानं दोषाधिक्यज्ञापनार्थमिति कल्पतरुः। 'श्वभ्रं' विदीर्णभूमागः। 'बिलं' विवरम्।। (वी. मि., आ., ३५).

2 पराशरमाधवीये, १, १, २२५.

'तीर्थं' जलावतरणमार्गः[1]।

वसिष्ठः—[६, १२]

नोप्ते, न शाद्वलोपजीव्यासु।

'शाद्वलः' हरितः स्निग्धो भूभागः।

विष्णुः—[६०, ६]

न चोषरे।

तथा—[६०, १३]

न पराङ्मुखो।

तथा—[६०, २०]

नाकाशे।

'आकाशे' अट्टालकादिस्थित इत्यर्थः।

तथा—[६०, २२–२३]

न प्रत्यनिलानलेन्द्वर्कस्त्रीगुरुब्राह्मणानां च। नैवावगुण्ठिताशिराः।

आपस्तम्बः—[१, ३०, १६–१७]

छायायां मूत्रपुरीषयोः कर्म वर्जयेत्। स्वां तु छायामवमेहेत्।

'स्वां तु छायां' स्वां च्छायां प्रतीत्यर्थः।

1 'चत्वरं' नानाजनावस्थानदेशः। 'तीर्थं' पुण्यदेशः, जलावतरणमार्गमिति कल्पतरुः (वी. मि., आ., ३६).

तथा—[१, ३०, १८]

न सोपानत्को मूत्रपुरीषे कुर्यात्।

तथा—[१, ३०, २३]

अग्निमादित्यमपो ब्राह्मणं गोदेवताश्चाभिमुखो मूत्र-पुरीषयोः कर्म वर्जयेत्।

गौतमः—[१९, १३]

न वाय्वग्निविप्रादित्यापो देवता गाश्च प्रतिपश्यन्वा मूत्रपुरीषामेध्यान्युदस्येत्।

यमः

प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्।
दृष्ट्वा सूर्यमुदीक्षेत गामग्निं ब्राह्मणां तथा॥
प्रत्यादित्यं प्रत्यनिलं प्रतिगां च प्रति द्विजम्।
प्रति सोमं प्रति जलं प्रति संध्ये च नित्यशः॥
हन्ति मेहयतः प्रज्ञां प्रति पन्थानमेव च।
मेहयन्ति य एतांश्च ते भवन्ति गतायुषः[1]॥

हारीतः

रथ्याचत्वरतीर्थेषु श्मशानायतनेषु च।
अपध्वंसमवाप्नोति आयुषा च वियुज्यते॥
आहारं च रहः कुर्यान्निर्हारं चैव सर्वदा।
युज्यते च श्रिया गुप्ते प्रकाशे बाध्यते श्रिया[2]॥

1 वी. मि., आह्नि., ३८.

2 'गुप्ताभ्यां लक्ष्म्युपेतः स्यात् प्रकाशे हीयते श्रिया' इति माधवाचार्यधृतपाठः (परा. मा., I. i, २२५).

## शौचविधिः

तथा हारीतः

लोष्टेन मृत्कणेन शुष्ककाष्ठेन वा[1] ।

पारस्करः—[२, ७, १६]

स्वयं प्रशीर्णेन काष्ठेन वा प्रमृजीत ।

गौतमः—[९, १५]

न पर्णलोष्टाश्मभिर्मूत्रपुरीषापकर्षणं कुर्यात्[2] ।

हारीते तु लोष्टविधिरितरद्रव्याभावे ।

आपस्तम्बः—[१, १०, २४]

अश्मानं लोष्टमार्द्रानोषधिवनस्पतीनूर्ध्वानाच्छिद्य मूत्रपुरीषयोः शुन्धनं वर्जयेत्[3] ।

देवलः

आ शौचान्नोत्सृजेच्छिश्नं प्रस्रावोच्चारयोः स्वयम् ।

याज्ञवल्क्यबौधायनौ[4]

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥

'अतन्द्रितः' असंजातालस्यः ।

1 लोष्टेन इति शुष्ककाष्ठाद्यभावे । गौतमेन तन्निषेधात् ।

2 "लोष्टशब्देन मृद्गृह्यते । ततश्चान्यैरपकर्षणं कुर्यात् ।" इति मस्करिव्याख्या । "न पर्णादिभिः मूत्रपुरीषयोरपकर्षणं कुर्यात् । अन्यैस्तु कुर्यात्" इति हरदत्तः ।

3 'शुन्धनं' शोधनम् ।

4 याज्ञवल्क्य, १, १७; बौधायनधर्मसूत्रे नास्ति.

ब्रह्माण्डपुराणे

उद्धृत्योदकमादाय मृत्तिकां चैव वाग्यतः ।
उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः ॥

तथा

सुनिर्णिक्ते मृदं दद्यान्मृदन्ते त्वप एव च ।

'सुनिर्णिक्ते' सुप्रक्षालितपाणिपादे ।

दक्षः

एका लिङ्गे तु सव्ये त्रिरुभयोर्मृद्द्वयं स्मृतम् ।

'सव्ये' 'उभयोः' इति च हस्ताभिप्रायेण । 'त्रिः' तिस्रः इत्यर्थः । एतावन्मूत्रोत्सर्गे शौचम् ।

तिस्रोऽपाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः ।
गृहस्थशौचमाख्यातं त्रिष्वन्येषु यथाक्रमम् ॥
द्विगुणं त्रिगुणं चैव चतुर्थस्य चतुर्गुणम् ।

मनुः—[५, १३४]

विण्मूत्रोत्सर्गसिद्ध्यर्थं मृद्वार्यादेयमर्थवत् ।
दैहिकानां मलानां च शुद्धिषु द्वादशस्वपि ॥

[1]मनुविष्णू

वसा शुक्रमसृङ्मज्जा मूत्रविट् घ्राणकर्णविट् ।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥
एका लिङ्गे गुदे तिस्रस्तथैवैककरे दश ।
उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥

1 मनु, ५, १३५–१३७, विष्णु, ६०, २५–२६.

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम् ॥

**यमः**

शिश्ने त्वेका गुदे तिस्रो वामे पाणौ चतुर्दश ।
ततः पुनरुभाभ्यां च दातव्याः सप्त मृत्तिकाः ॥

**शङ्खः**

मेहने मृत्तिकाः सप्त लिङ्गे द्वे परिकीर्तिते ।
एकस्मिन् विंशतिर्हस्ते द्वयोर्देयाश्चतुर्दश ॥

'मेहनं' अपानम् ।

**तथा**

तिस्रस्तु मृत्तिका देयाः कृत्वा तु नखशोधनम् ।
तिस्रस्तु पादयोर्देया शौचकामस्य नित्यशः ॥
शौचमेतद्गृहस्थानां तथा गुरुनिवासिनाम् ।
द्विगुणं स्याद्वनस्थानां यतीनां त्रिगुणं भवेत् ॥

**पैठीनसिः**

मृत्तिकां संगृह्य एका लिङ्गे अपाने पञ्च एकस्मिन् हस्ते दश उभयोः सप्त मृत्तिकाः ।

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।
त्रिगुणं च वनस्थानां यतीनां च चतुर्गुणम् ॥

गन्धलेपक्षयाद्वा प्रक्षाल्याचम्य प्रयतो भवति[1] ।

1 वी. मि. आह्नि., ४४-४५.

हारीतः[1]

एकान्तमुत्क्रम्य एका लिङ्गे तिस्रो मृदोऽपाने दद्यात् न वार्शोदोषात् पाणिं प्रक्षाल्य दश सव्ये षट् पृष्ठे सप्तोभाभ्याम् । द्विगुणं ब्रह्मचारिणाम् । त्रिगुणं वानप्रस्थानाम् । चतुर्गुणं भिक्षूणाम् ।

[2]ब्रह्मपुराणे

द्वे लिङ्गे मृत्तिके देये गुदे सप्त यथाक्रमम् ।
द्वात्रिंशद्वामहस्ते च तथा देयास्तु मृत्तिकाः ॥
द्वयोस्तु षोडशान्यास्तु पुनः सप्त च सर्वदा ।
पादयोर्द्वे गृहीत्वा च सुप्रक्षालितपाणिना ॥
द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम् ।

बौधायनः—[१, १०, ११–१४]

मूत्रे मृदाद्भिः प्रक्षालनम् । त्रिः पाणौ । तद्वत् पुरीषे पर्यायः । तिस्रः [पायोः पाणेश्च][3] ।

[यमः

शिश्ने त्वेका गुदे तिस्रो वामे पाणौ चतुर्दश ।
ततः पुनरुभाभ्यां च दातव्याः सप्त मृत्तिकाः ॥]
शौचमेतद्गृहस्थस्य द्विगुणं ब्रह्मचारिणः ।
त्रिगुणं च वनस्थस्य भिक्षोरेतच्चतुर्गुणम् ॥

1 वी. मि. आह्नि., ५३–५४—'एकान्तं' विजनम् । 'उत्क्रम्य' मूत्रपुरीषोत्सर्गस्थानं उत्थाय गत्वा । 'अर्शोदोषात्' अर्शोरोगात् ।

2 वी. मि. आह्नि., ५४.

3 पायुरपानप्रदेशः । मूत्रे यदुक्तं तेन पुरीषे त्रिरावृत्तेन भवितव्यम् ॥ (गोविन्दस्वामी).

शङ्खः

मेहने मृत्तिकाः [सप्त लिङ्गे द्वे परिकीर्तिते ।
एकस्मिन् विंशतिर्हस्ते द्वयोर्देयाश्चतुर्दश ॥]

देवलः

यावत्साध्विति मन्येत तावच्छौचं विधीयते ।
प्रमाणं द्रव्यसंख्या वा न शिष्टैरुपदिश्यते ॥

एतद्वचनानुसारत् मनूक्तमृत्संख्याधिकोत्तरमृत्संख्यानां गन्धलेपानुवृत्तिशङ्कया व्यवस्था। या चतुराद्या विहिता संख्या तदनुष्ठाने तु संख्याधिगमेऽपि विहितसंख्यापर्यन्तं शौचमवश्यं कर्तव्यम् ।

तदुक्तं दक्षेण

न्यूनाधिकं न कर्तव्यं शौचशुद्धिमभीप्सता ।
प्रायश्चित्तेषु युज्येत विहितातिक्रमे कृते ॥ इति ।

शौचानन्तरम्—

शङ्खलिखितौ[1]

कमण्डलुमुपस्पृश्य प्रक्षाल्य पाणिपादौ च चक्ष्वेशानं मनसा ध्यायेत् ।

'ईशानं' सर्वेश्वरम् ।

शौचानन्तरम्—

हारीतः

तिसृभिः पादौ प्रक्षाल्य गोमयेन मृदा वा कमण्डलुं परिमृज्य पूर्ववदुपस्पृश्यादित्यं सोममग्निं वीक्षेत ।

1 वी. मि. आह्नि., ६१.

उपस्पृश्य दिवा आदित्यमग्निं, रात्रौ सोमम[illegible] वा वीक्षेत ।

दक्षः

यथोदितं दिवा शौचमर्धं रात्रौ विधीयते ।
आ[illegible]रस्य तदर्धं स्यात्तदर्धं च पथि स्मृतम् ॥
अर्ध[illegible] तु प्रथमा मृत्तिका स्मृता ।
द्वितीया च तृतीया स्यात्तदर्धा परिकीर्तिता ॥
लिङ्गेऽप्यत्र समाख्याता त्रिपर्वी पूर्यते यया ।
दातव्यमुदकं तावद्यावत्स्यान्मृत्परिक्षयः ॥
मुधाद्रव्येण शुद्धिः स्यान्न क्लेशो न धनव्ययः ।

'मुधाद्रव्येण' सुलभद्रव्येण ।

यस्य शौचेऽपि शैथिल्यं वृत्तं तस्य परीक्षितम् ॥

[1]विष्णुपुराणे—[३, १०, १६-१७]

वल्मीकमूषिकोत्खातां मृदमन्तर्जलात्तथा ।
शौचावशिष्टां गेहाच्च नादद्याल्लेपसंभवाम् ॥
अन्तः प्राण्यवपन्नां च हलोत्खातां च पार्थिव ।
परि[illegible]ताः सकलाः शौचसाधने ॥

'अन्तः प्र[illegible]ण्यवपन्नां' अन्तः मध्ये प्राणिभिः अवपन्नां व्याप्ताम् ।

1 'वल्मीकमूषिकोद्धृतां' इति 'अणुप्राण्युपपन्नां च' इति च गोरखपुरमुद्रित-विष्णुपुराणे (पृ. २२९).

यमः

आहरेन्मृत्तिकां विप्रः कूलात्ससिकतां तथा ।
नाखूत्कृष्टान्न वल्मीकात्पांसुलान्न च कर्दमात् ॥
न मार्गान्नोषराच्चैव शौचोच्छिष्टं परस्य वा ।
एतास्तु वर्जयेद्विद्वान् वृथाशौचं हि तन्मतम् ॥

'आखुः' मूषिकः ।

|| ७ ||

# अथ संध्याविधिः

तत्र विष्णुः—[२८, १-२]

अथ ब्रह्मचारिणो गुरुकुलवासः । संध्याद्वयोपासनम् ।

योगियाज्ञवल्क्यः[1]

अतः परं प्रवक्ष्यामि संध्योपासननिर्णयम् ।
अहोरात्रकृतैः पापैर्यामुपास्य प्रमुच्यते ॥
सर्वावस्थोऽपि यो विप्रः संध्योपासनतत्परः ।
ब्राह्मण्याच्च न हीयेत अन्यजन्मगतोऽपि सन् ॥

'सर्वावस्थः' नित्यसेवादिकर्मरतः, सम्यक् शौचाद्यसमर्थोऽपीत्यर्थः ।

मनुः—[२, १०१]

पूर्वां संध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति ।
पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम्[2] ॥

[3]शातातपः

अनृतं मद्यगन्धं च दिवा मैथुनमेव च ।

1 वी. मि., आह्नि., २५६.

2 कुल्लूकः 'सावित्रीमर्कदर्शनात्' इति द्वितीयपादं 'सम्यगृक्षविभावनात्' इति चतुर्थपादं च पठति ।

3 वी. मि. आह्नि., २५७.

पुनाति वृषलस्यान्नं बहिः संध्या ह्युपासिता ॥

'वृषलो' अत्र अधार्मिकः ।

[1]तदुक्तं भारते

"वृषो हि भगवान् धर्मस्तस्य यः कुरुते त्वलम् ।
वृषलं तं विदुर्देवाः" ॥

इति ।

यमः

यदह्ना कुरुते पापं कर्मणा मनसा गिरा ।
आसीनः पश्चिमां संध्यां प्राणायामैश्च हन्ति तत् ॥
यद्रात्र्या कुरुते पापं कर्मणा मनसा गिरा ।
पूर्वां संध्यामुपासीनः प्राणायामैर्व्यपोहति ॥
संध्यामुपासते ये तु सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥

एतच्चाज्ञानादिकृतपापविषयम् ।

दिवा वा यदि वा रात्रौ यदज्ञानकृतं भवेत् ।
त्रिकालसंध्याकरणात्तत्सर्वं विप्रणश्यति ॥

इति [2]याज्ञवल्क्यवचनात् ।

बौधायनः—[२, ७, १८]

यदुपस्थकृतं पापं पद्भ्यां वै यत्कृतं भवेत् ।
बाहुभ्यां मनसा चैव वाचा वाथ कृतं भवेत् ॥
सायं संध्यामुपस्थाय तेन तस्मात्प्रमुच्यते ।

1 वी. मि. आह्नि., २५७.

2 अयं श्लोकः याज्ञवल्क्यस्मृतौ न लब्धः ।

शङ्खलिखितौ

सव्रती बहिः संध्यामुपासीत ।

'सव्रती' सह व्रतेन यद्वर्ततेऽध्ययनादि तत्सव्रतम्, तद्वान् ब्रह्मचारी[1] ॥

मनुः—[२, २१९]

नैनं ग्रामेऽभिनिम्लोचेत्[2] सूर्यो नाभ्युदयात्क्वचित् ।

'एनं' ब्रह्मचारिणम् । 'अभिनिम्लोचेत्' अस्तं गच्छेत् । ग्रामाद्बहिः ब्रह्मचारिणा सूर्योदयास्तमयौ संपाद्याविति तात्पर्यार्थः[3] ।

शातातपः[3]

गृहेषु प्राकृती संध्या गोष्ठे शतगुणा स्मृता ।
नदीषु शतसाहस्रा अनन्ता शिवसंनिधौ ॥

'प्राकृती' एकगुणफला[4] ।

[5]संवर्तः

प्रातः संध्यां सनक्षत्रामुपासीत यथाविधि ।

1 मित्रमिश्रेणोद्धृतः वी. मि., आह्नि., २७०
2 'नाभिनिम्लोचेत्' नास्तमियात् ।
3 वी. मि. आह्नि., २६०.
4 'प्राकृती' यथोक्तफला (वी. मि.)
5 वी. मि. आह्नि, २६१-दक्ष:—
राज्यान्तयामनाड्यौ द्वे सन्ध्यादि: काल उच्यते ।
'सनक्षत्रां' इति अनेन दक्षैकवाक्यतया राज्यन्तघटिकाद्वयादौ उपक्रम्य सूर्यबिम्बरेखादर्शनपर्यन्तं प्रात: सन्ध्यामुपासीत इत्यर्थ: । 'सादित्यां' इति अनेन उपक्रमकालो दर्शितः । 'अर्धास्तमितभास्करां' इत्यनेन भास्करस्य अर्धास्तमितसमय: समाप्तिकालो दर्शित: । स च प्रत्यक् आ तारकोदयात् इति याज्ञवल्क्यैकवाक्यत्वात् नक्षत्रोदयकालोपलक्षक: ।

रात्र्यां पश्चिमां संध्यामर्धास्तमितभास्कराम् ॥

<u>योगियाज्ञवल्क्यः</u>

ह्रासवृद्धी तु सततं दिवसानां यथाक्रमम् ।
संध्या मुहूर्तमात्रं तु ह्रासे वृद्धौ समा स्मृता ॥

'मुहूर्तमात्रं' नाडीद्वयमात्रम् ।

<u>तथा</u>

संधौ संध्यामुपासीत नास्तगे नोद्गते रवौ[1] ।

<u>बौधायनः</u>—[२, ७, १२–१४]

सुपूर्वामपि पूर्वामुपक्रम्योदिते आदित्ये समाप्नुयात् । अनस्तमित उपक्रम्य सुपश्चादपि पश्चिमाम् । संध्ययोश्च संपत्तावहोरात्रयोः संततिः ॥

'सुपूर्वां' सुष्ठु पूर्वकालां, बहुषु नक्षत्रेषु विद्यमानेषु । 'अपि'शब्दात् अल्पेषु नक्षत्रेषु विद्यमानेषु । 'सुपश्चादपि' बहुनक्षत्रदर्शनावधि । 'अपि'शब्दात् अल्पनक्षत्रदर्शनेऽपि समाप्नुयादित्यर्थः[2] ।

<u>गौतमः</u>—[२, १४–१७]

अपामुपस्पर्शनम् । एके गोदानादि । बहिः संध्यत्वं च । तिष्ठेत्पूर्वामासीन उत्तरां सज्योतिष्या ज्योतिषो दर्शनाद्वाग्यतः ॥

1 'सन्धौ' इति वक्ष्यमाणमध्याह्नसन्ध्याकालस्यापि उपलक्षणम् । (वी. मि., आह्नि., २६१).

2 वी. मि., आह्नि., २६३.

'एके' आचार्याः गोदानव्रतादारभ्य स्नानं बहिः संध्यत्वं च वदन्तीत्यर्थः[1]।

विष्णुः—[२८, २–४]

पूर्वां संध्यां जपेत्तिष्ठन् पश्चिमामासीनः। कालद्वयमेकाग्निकर्मकरणम्। अप्सु दण्डवन्मज्जनम्।

हारीतः

अस्नायी, स्नायी वा दण्डवत्।

अत्र च प्रयतोऽस्नायी अप्रयतः स्नायीति व्यवस्थितो विकल्पः। 'अप्रयतोऽभिषिक्तः प्रयतो वानभिषिक्तः' इति बौधायन[२, ४, २]वचनात्।

आपस्तम्बः—[१, २, ३०]

नाप्सु श्लाघमानः स्नायात्।

'श्लाघमानः' स्नानेन स्वापोत्कृष्टं मलं प्रकाशयन्[2]।

बौधायनः—[२, ७, १–४]

अथातः संध्योपासनविधिं व्याख्यास्यामः। तीर्थं गत्वाप्रयतोऽभिषिक्तः प्रयतो वानभिषिक्तः प्रक्षालित-

1 "गोदानं नाम छन्दोगानां द्वितीयं व्रतं, अन्येषामपि षोडशे वर्षे धारयितव्यम्। तेषामपि षोडशे गोदानधारणं केचिदिच्छन्ति। तत आरभ्य एके स्नानमिच्छन्ति। गोदानात् प्राक् नित्यस्नानं न कुर्यात्, नैमित्तिकमेव कर्तव्यम्। तत ऊर्ध्वं नित्यस्नानमपि एके आचार्या इच्छन्ति। एक इति वचनात् न तु **गौतमः**।" **मस्करिभाष्ये**, पृ. ४१–४२)।

"'आज्योतिषो दर्शनात्', प्रातः सूर्यदर्शनावधि, सायं नक्षत्रदर्शनावधि।" (वी. मि., आह्नि. २६३).

2 'श्लाघा' स्नानीयमलापकर्षणम्, अत्रैव श्लाघाप्रतिषेधः इति **हरदत्तः**।

पाणिपादः अप आचम्य 'अग्निश्च मा मन्युश्च'[1] इति सायमपः पीत्वा 'सूर्यश्च मा मन्युश्च[1]' इति प्रातः, सपवित्रेण पाणिना सुरभिमत्या,[2] अब्लिङ्गाभिः,[3] वारुणीभिः[4] हिरण्यवर्णाभिः, पावमानीभिः, व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति ॥

'सुरभिमती' 'दधिक्राव्ण' इत्यादिका। 'अब्लिङ्गाभिः' 'आपो हि ष्ठा' इत्यादिभिः। 'वारुण्यः' वरुणदेवताका 'यच्चिद्धि ते विश' इत्याद्यास्तिस्रः। 'हिरण्यवर्णाः' 'हिरण्यवर्णाः शुचयः पावका' इति चतस्रः। 'पावमान्यः' 'पवमानः सुवर्जनः' इत्याद्याः।

<u>अथाप्युदाहरन्ति</u>

अम्भोऽवगाहनं स्नानं विहितं सार्ववर्णिकम्।
मन्त्रवत्प्रोक्षणं चापि द्विजातीनां विशिष्यते ॥

1 मन्युश्च—अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यदह्ना पापमकार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। अहस्तदवलुम्पतु। यत्किञ्च दुरितं मयि। इदमहं माममृतयोनौ। सत्ये ज्योतिषि जुहोमि स्वाहा। [याज्ञिकी, ३९] 'सूर्यश्च' इति याज्ञिकी, २४, २५.

2 दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।
सुरभि नो मुखा करत् प्र ण आयूꣳषि तारिषत् ॥
सुरभिमती—(तै. सं., १. ५, ११)

3 आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे। यो वश्शिवतमो रसतस्य भाजयतेह नः। उशतीरिव मातरः। तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः ॥
अब्दैवती—(तै. सं., ५, ६, १)

4 यच्चिद्धि ते विशो यथा प्रदेव वरुण व्रतम्। मिनीमसि द्यविद्यवि। यत्किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि। अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः। कितवासो यद्रिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म। सर्वा ता विष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः।
वारुणी—(तै. सं ३, ४, ११).

इति। किं च

सर्वकर्मणां चैवारम्भेषु प्राक् संध्योपासनकालाच्चैतेन पवित्रसमूहेनात्मानं प्रोक्ष्य प्रयतो भवति।

एतच्च 'अग्निश्च मा मन्युश्च' 'पवित्रैः' इत्यन्तं मार्जनं स्नातस्यापि। योगियाज्ञवल्कीयं[1] 'शंन आप' इत्यादि 'अघमर्षणसूक्तेन' इत्यन्तं मन्त्रैर्मार्जनं तु अप्रयतस्यैव कर्माङ्गमुख्यस्नानाशक्तौ द्रष्टव्यम्।

असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया।
मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः॥

इति, 'कालदोषादसामर्थ्यात्' इति च योगियाज्ञवल्क्यवचनात्। 'सर्वकर्मणां' श्राद्धादीनामपि। 'पवित्रसमूहः' सुरभिमत्यादिरनन्तरोक्तो मन्त्रसमूहः।

अथाप्युदाहरन्ति

दर्भेष्वासीनो दर्भान् धारयमाणः सोदकेन पाणिना प्राङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेदपरिमितकृत्वः प्राणायामशो वा शतकृत्व उभयतःप्रणवां ससप्तव्याहृतिकां मनसा वा दशकृत्वः त्रिभिश्च प्राणायामैः श्रान्तो ब्रह्महृदयेन वारुणीभ्यां रात्रिमुपतिष्ठते 'इमं मे वरुण' 'तत्वायामि' इति द्वाभ्यामेवं प्रातः प्राङ्मुखस्तिष्ठन् मैत्रीभ्यामहरुपतिष्ठते 'मित्रस्य चर्षणी धृतो' 'मित्रो जनान् यातयति प्रजानन्' इति द्वाभ्यामिति।

1 योगियाज्ञवल्क्योक्तस्नानप्रयोगः वीरमित्रोदये, आह्निकप्रकाशे पृ. २२१–२२४ द्रष्टव्यः।

'अपरिमित' इति पूर्वोक्तसंख्यातिरिक्तसंख्यत्वं विवक्षितम्। 'प्राणायामशो वा शतकृत्वः' इति, 'प्राणायामशः' प्राणायामेन। एतदुक्तं भवति—यावद्भिः प्राणायामैः सावित्र्याः शतं भवति तावतः प्राणायामान् कुर्यादिति। प्राणायामश्चात्र प्राणनिरोधमात्रमभिहितम्, पूर्वं सावित्रीमात्रस्य प्रक्रान्तत्वात्। 'उभयतः प्रणवां ससप्तव्याहृतिकां मनसा वा दशकृत्वः' इति, 'उभयतः' आदावन्ते चोंकारं कुर्यादित्यर्थः। एतेषां त्रयाणां पक्षाणां शक्त्यपेक्षया विकल्पः। 'त्रिभिश्च प्राणायामैः श्रान्तो ब्रह्महृदयेन' इति, पूर्वोक्तानामेकं कल्पमनुष्ठाय ततो ब्रह्महृदयेन प्रणवेन त्रीन् प्राणायामान् कृत्वा तैः 'श्रान्तः' खिन्न इत्यर्थः। एवं भूतः सन् 'इमं मे वरुण' 'तत्वायामि' इति द्वाभ्यां वारुणीभ्यां रात्रिमुपतिष्ठते। वरुणदेवताकत्वाद्रात्रेः वरुणोपस्थानेन तस्या उपस्थानं कृतं भवतीति। एतेन 'मैत्रीभ्यामहरुपतिष्ठते' इति व्याख्येयम्। तथा च तैत्तिरीयश्रुतिः—'मैत्रं वा अहर्वारुणी रात्रिः' इति।

याज्ञवल्क्यः—[१, २२]

स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः।
सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः॥

तथा—[१, २४–२५]

प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु।
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्॥
संध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात्।

'अब्दैवतैः' 'आपो हि ष्ठा' इत्यादिभिः। 'मार्जनं' देवतीर्थस्थैः कुशैः शिरस्युदकप्रक्षेपः।

शिरसो मार्जनं कुर्यात् कुशैः सोदकबिन्दुभिः[1] ।

इति छन्दोगपरिशिष्टे कात्यायनवचनात्। 'सूर्यस्य चाप्युपस्थानं' सौरेण मन्त्रेण 'उदुत्यं जातवेदसं' इत्यादिना प्रकाशनम्। 'प्रत्यक्' पश्चिमाभिमुखः। 'प्राक्' पूर्वाभिमुखः।

योगियाज्ञवल्क्यः

ओंकारं व्याहृतीः सप्त गायत्र्या शिरसा सह।
आपो हि ष्ठा ऋचस्तिस्रः सूक्तं चैवाघमर्षणम् ॥
आदित्यरक्षणार्थाय सायं प्रातर्दिने दिने।
सृष्टं स्वयंभुवा पूर्वं ब्राह्मणस्तन्मुखं स्मृतम् ॥

तथा[2]

यावन्तोऽस्यां विकर्मस्थाः पृथिव्यां बालिशा द्विजाः ।
तेषां च पावनार्थाय संध्या सृष्टा स्वयंभुवा ॥
संध्या उपासिता येन विष्णुस्तेन उपासितः ।

'विकर्मस्थाः' विहितकर्मातिक्रमनिषिद्धकर्मकर्तारः ।

तथा[3]

त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः ।
प्राद्रवन्ति सहस्रांशुमुदयन्तं दिने दिने ॥
उदयन्तं हि ते सर्वे सूर्यमिच्छन्ति खादितुम् ।
अथ सूर्यस्य तेषां च युद्धमासीत्सुदारुणम् ॥
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः ।

1 २, १, ४.
2 वी. मि., आह्नि, २५३.
3 वी. मि., आह्नि., २५६-२५७.

संध्येति तमुपासीना यत्क्षिपन्ति महज्जलम् ॥
ॐकारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम् ।
तेन दह्यन्ति ते दैत्या वज्रीभूतेन वारिणा ॥

'तं' सूर्यम् । 'ॐकारब्रह्मसंयुक्तं' ॐकाररूपेण ब्रह्मणा संयुक्तम् ।

एतद्विदित्वा यो विप्रः उपास्ते शंसितव्रतः ।
दीर्घमायुः स विन्देत सर्वपापैः प्रमुच्यते ॥

[1]तथा

पूर्वा संध्या तु गायत्री सावित्री मध्यमा स्मृता ।
या भवेत्पश्चिमा संध्या सा विज्ञेया सरस्वती ॥
श्वेता भवति सावित्री गायत्री रक्तवर्णिका ।
कृष्णा सरस्वती ज्ञेया संध्यात्रयमुदाहृतम् ॥

तथा

त्रयाणां चैव देवानां ब्रह्मादीनां तु संगमः ।
संधिः सुराणां सर्वेषां तेन संध्या उदाहृता ॥
गरीयसीति भूतानां यस्मात्पैत्री तनुर्हि सा ।
'पैत्री तनुः' पितामहस्य पितॄन् सृष्टवतः ।
संधिते तु परे सूक्ष्मे निर्गुणे गुणबोधिनि ।

1 'रक्ता भवति गायत्री सावित्री श्वेतवर्णिका' इति अपरार्के (पृ. ४९) पाठः । वी. मि. आह्नि., २५३. माधवाचार्यस्तु (I, i., २९०) 'स्मृत्यन्तरेण' इति प्रतीकमादायैवं पठति—

गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका ।
सरस्वती तथा कृष्णा उपास्या वर्णभेदतः ॥
गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी ।
सरस्वती विष्णुरूपा उपास्या रूपभेदतः ॥

प्रधानपुरुषातीते संधिते संधिरुच्यते ॥

'संधिते परे' सर्वतः श्रेष्ठे, परमात्मनीति यावत् ।

संध्या उपासिता येन विष्णुस्तेन उपासितः ।

इति पूर्वमुक्तत्वात् । 'सूक्ष्मे' अस्थूले । 'निर्गुणे' विकारगुणरहिते । 'गुणबोधिनि' गुणानां मानादीनां सर्वेषां ज्ञातरि । 'प्रधानपुरुषातीते' प्रधानं अव्यक्तं, पुरुषो जीवः, तावतीते ताभ्यां भिन्ने । 'संधिते' संधानं कुर्वति । सूर्यस्योपस्थितत्वात् । सूर्ये अधिकरणे पुनः संधिते तस्मिन् सूर्ये संध्यया देवतया संबन्ध इति बोद्धव्यम् । 'संध्येति समुपासीना' इत्युक्तत्वात् । एतेनैतत्संधानद्वयनिमित्तस्तस्मिन् काले संधिव्यपदेश इत्यभिसंधिः ।

तथा

[1]संध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा ।

'आत्मविदा' शरीरेन्द्रियव्यतिरिक्तं, नित्याकरणे परलोके दुःखभागिनमात्मानं विजानता ।

प्रसंगात् स्नानमाह—

उभे संध्ये तु स्नातव्यं ब्राह्मणैश्च गृहाश्रितैः ।
तिसृष्वपि च संध्यासु स्नातव्यं तु तपस्विना ॥

'तपस्वी' वानप्रस्थादिः ।

कालदोषादसामर्थ्यान्न शक्नोति यदा ह्यसौ ।
तदा ज्ञात्वा ऋषिभ्यस्तु मन्त्रैर्दृष्टं तु मार्जनम् ॥

1 वी. मि. आह्नि., २५४.

'असामर्थ्यात्' रोगाद्युपघातात्। 'कालदोषात्' अत्यन्तं शीतादेः। 'मन्त्रैस्तु मार्जनं दृष्टं ऋषिभ्यो ज्ञात्वा' कुर्यादित्यर्थः।

शं न आपस्तु द्रुपदा आपो हि ष्ठाघमर्षणम्।
एतैश्चतुर्भिर्ऋग्मन्त्रैर्मन्त्रस्नानमुदाहृतम्।

'शं न आपो धन्वन्या' इति कठब्राह्मणे[1]। 'चतुर्भिः' इति सूक्तापेक्षया। ऋचां भूयस्त्वात्।

स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः।
अघमर्षणसूक्तेन अश्वमेधावभृत्समम्॥
अप्रायत्ये समुत्पन्ने स्नानमेव तु कारयेत्।
पूर्वोद्दिष्टैस्तथा मन्त्रैरन्यथा मार्जनं स्मृतम्॥

तथा

[2]अघमर्षणसूक्तस्य ऋषिरेवाघमर्षणः।
[आनुष्टुभं भवेच्छन्दो भावधृत्तश्च दैवतम्॥
अश्वमेधावभृतके विनियोगस्तु कल्पितः।]
सर्वपापापनोदार्थे स्मृतिकारैरुदाहृतः॥

['भावधृत्तः' भावे भावात्मके जगति धृत्तः प्रवृत्तो धाता।]

तथा

तत्त्वभूताण्डपिण्डस्य स्थित्युत्पत्तिलयं तथा।
सूक्ष्मेऽस्मिन् व्याहृतं सर्वं मन्त्रार्थोऽस्यायमुच्यते॥

1 काठकम्, २, १.
2 वी. मि. आह्नि., २७७.

'तत्वभूताण्डपिण्डस्य' ब्रह्माण्डस्य, जगत इति यावत्। 'सूक्ष्मे' च ब्रह्मणि 'सृष्टिस्थितिलया' 'अस्मिन्' सूक्ते व्याहृताः।

हत्वा लोकानपीमांस्त्रीन् जपेत्त्रिरघमर्षणम्।
यथाश्वमेधावभृथ एव तन्मनुरब्रवीत्॥
यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः।
तथाघमर्षणं सूक्तं सर्वपापापनोदनम्॥

तथा

सिन्धुद्वीपो भवेदार्षं गायत्री च्छन्द एव तु।
आपस्तु दैवतं प्रोक्तं विनियोगस्तु मार्जने॥
सर्वत्र पावनं कर्म अब्लिङ्गानामुदाहृतम्।
कोकिलो राजपुत्रस्तु द्रुपदादार्षमुच्यते॥
आनुष्टुभं भवेच्छन्द आपश्चैव तु दैवतम्।
सौत्रामण्यवभृथके स्नाने तद्विनियोजनम्॥
द्रुपदा नाम सा देवी यजुर्वेदे प्रतिष्ठिता।
अन्तर्जले त्रिरावर्त्य मुच्यते ब्रह्महत्यया॥
अपः पाण्योः समादाय त्रिः पठेद्द्रुपदामृचम्।
तत्तोयं मूर्ध्नि विन्यस्य सर्वपापैः प्रमुच्यते॥
[1]एवं ज्ञात्वा तु मन्त्राणां विनियोगं द्विजोत्तम।
संध्यामुपासते यद्वद्यथावत्तन्निबोधत॥
दिशान्याभिमुखो भूत्वा शुचिः प्रयतमानसः।
आचान्तः पुनराचामेद् ऋतमित्यभिमन्त्र्य च॥
आन्तरं शुद्ध्यति ह्येवमन्नपानमलोद्भवम्।

1 वी. मि. आह्नि., २६७–२६८.

[1]त्रिरावर्त्य तु सावित्रीं प्रणवं व्याहृतीस्तथा ॥
मार्जनं च तथा कृत्वा आपो हि ष्ठेति मार्जयेत् ।
सार्धामृचं तु प्रक्षिप्य ऊर्ध्वं सार्धामधः क्षिपेत् ॥
अधोभागविसृष्टायामसुरा यान्ति संक्षयम् ।
सर्वतीर्थाभिषेकस्तु ऊर्ध्वं संमार्जनाद्भवेत् ॥
[2][अघमर्षणसूक्तेन मार्जनं कारयेत्ततः ।
शं न आपश्च द्रुपदां वामतः संप्रयोजयेत् ॥]
ॐकारपूर्वां गायत्रीमब्लिङ्गाद्यघमर्षणम् ।
सातत्यं ब्रह्म चैतद्वै पुरा दृष्टं स्वयंभुवा ॥
एवं संमार्जनं कृत्वा बाह्यशुद्ध्यर्थकारणम् ।
तथाभ्यन्तरशुद्ध्यर्थं प्राणायामान् समाचरेत् ॥

एतत्तमेव 'सातत्यं' नित्यानुष्ठेयत्वात् । 'ब्रह्म' ब्रह्मदेवः । 'शं न आप' इत्यादि तु काम्यविषयम् ।

शङ्खः—[९, ८–१०]

इत्येवमुक्त्वा कर्तव्यं तदा संमार्जनं जले ।
आपो हि ष्ठेति तिसृभिर्यथावदनुपूर्वशः ॥
हिरण्यवर्णेति च वै ऋग्भिश्चतसृभिस्तथा ।
शं नो देवीरिति तथा शं न आपस्तथैव च ॥
इदमापः प्रवहता तथा मन्त्रमुदीरयेत् ।

'इत्येवमुक्त्वा' इति, 'प्रपद्ये वरुणं देवं' इत्यादि 'मां च रक्षन्तु सर्वशः' इत्यन्तमन्त्रसमूहम् ।

[3]आचम्यैवं पुरा प्रोक्तास्तीर्थसंमार्जने तु ये ।

1 वी. मि. आह्नि., २६९.

2. कोष्ठकान्तर्गतो भागः मातृकायां त्रुटितः.

3 शङ्खस्मृतिः, १०, १६–२०.

मन्त्रास्तैर्मन्त्रितं तोयं मूर्ध्नि भूमौ तथा क्षिपेत् ॥
क्षिप्तेन मूर्ध्नि तोयेन पापमस्य प्रणश्यति ।
भूमौ क्षिप्तेन हन्यन्ते असुरा देवशत्रवः ॥
व्याहृतीः कीर्तयेच्चैव तथैवाव्ययमक्षरम् ।

'आचम्यैवं' अनन्तरोक्ताचमनकल्पेन । 'तीर्थसंमार्जने' अन्तर्जलमार्जने 'पुरा प्रोक्ताः' आपो हि ष्ठाद्याः । 'अव्ययं' ओंकाररूपम् ।

उपस्पृशेत्ततः पश्चान्मन्त्रेणानेन धर्मतः ॥
अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ॥

'उपस्पृशेत्' आचामेत् ।

आचम्य च ततः पश्चादादित्याभिमुखो जलम् ।
उदुत्यं जातवेदेति मन्त्रेणानेन च क्षिपेत् ॥
एष एव विधिः प्रोक्तः संध्ययोश्च द्विजातिभिः ।

'एष एव' मध्याह्नप्रोक्तः ।

पूर्वां संध्यां जपेत्तिष्ठन्नासीनः पश्चिमां तथा ॥
ततो जपेत्पवित्राणि पवित्रं वा स्वशक्तितः ।
ऋषयो दीर्घसंध्यत्वाद्दीर्घमायुरवाप्नुवन् ॥

'पवित्राणि' अघमर्षणादीनि शङ्खोक्तानि । 'दीर्घसंध्यत्वं' जपेन दीर्घकालव्याप्ता । एतच्च दीर्घसंध्याकरणं दीर्घायुष्कामस्य । जपेतिकर्तव्यतां नैयतिकालिके वक्ष्यामः ।

छन्दोगपरिशिष्टे कात्यायनः—[गोभिलस्मृति, २, १-१७]

अत ऊर्ध्वं प्रवक्ष्यामि संध्योपासनकं विधिम् ।

अनर्हः कर्मणां विप्रः संध्याहीनो यतः स्मृतः ॥
सव्ये पाणौ कुशान् कृत्वा कुर्यादाचमनक्रियाम् ।
सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः ॥

'उपग्रहाः' बहवः कुशाः ।

रक्षान्ते वारिणात्मानं परिवेष्ट्य समंततः ।
शिरसो मार्जनं कुर्यात् कुशैः सोदकबिन्दुभिः ॥

'अन्ते' पूर्वोक्तकर्मान्ते, आत्मानं समंततो वारिणा वेष्टयित्वा रक्षा कार्येत्यर्थः ।

प्रणवो भूर्भुवः स्वश्च सावित्री च तृतीयका ।
अब्दैवत्यस्तृचश्चैव चतुर्थ इति मार्जनम् ॥
[1]भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ।
महर्जनस्तपः सत्यं गायत्री च शिरस्तथा ॥
'आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वः' इति शिरः ।
प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः ॥
एता एतां सहैतेन तथैभिर्दशभिः सह ।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥
[2]करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च ।
जपेदनायतासुर्वा त्रिः सकृद्वाघमर्षणम् ॥
उत्थायार्कं प्रति प्रोहेत् त्रिकेणाञ्जलिनाम्भसः ।

'एताः' व्याहृतीः । 'एतां' गायत्रीम् । 'एतेन' शिरसा । 'एभिः' प्रणवैः दशभिः सह इत्यर्थः । 'प्रोहेत्' क्षिपेत् । 'त्रिकेण' प्रणवव्याहृतिगायत्र्यात्मकेन ।

1. वी. मि., आह्नि. २७२.
2 वी. मि., आह्नि. २८२.

उच्चित्रमित्यृग्द्वयेन चोपतिष्ठेदनन्तरम् ॥

'उत्' 'उदुत्यं जातवेदसं' इत्यादि। 'चित्रं' 'चित्रं देवानां' इति, 'उद्वयं तमसस्पतिः' इति च।

संध्याद्वये ऽप्युपस्थानमेतदाहुर्मनीषिणः।
मध्ये त्वह्न उदये च विभ्राडादीच्छया भवेत् ॥

'विभ्राडादि' 'विभ्राड् बृहत्' इत्यनुवाकः, शिवसंकल्पः, मण्डलब्राह्मणं, पुरुषसूक्तं च।

तदसंसक्तपार्ष्णिर्वा एकपादर्धपादपि।
कुर्यात् कृताञ्जलिर्वापि ऊर्ध्वबाहुरथापि वा ॥

'तत्' उपस्थानम्। 'असंसक्तपार्ष्णिः' पृथिव्यामलग्नगुल्फतलभागः।

[1]यत्र स्यात्कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः।
भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ह्यवाप्यते ॥
तिष्ठेदोदयनात्पूर्वां मध्यमामपि शक्तितः।
आसीतोडूद्गमाच्चान्त्यां संध्यां पूर्वत्रिकं जपन् ॥
एतत्संध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम्।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥
संध्यालोपस्य चाकर्ता स्नानशीलश्च यः पुमान्।
तं दोषा नोपसर्पन्ति गरुत्मन्तमिवोरगाः ॥

'आ उडूद्गमात्' आ तारकोदयात्। 'यदधिष्ठितं' यदधीनम्।

1 वी. मि. आह्नि. २८५.

शङ्खलिखितौ

आचारवतां धर्मो ह्यावश्यक इत्याचारो ऋषीणां स्थितिः देवतानां चरित्रं मनुष्याणाम्। तेन

[1]पूर्वां संध्यां जपंस्तिष्ठेत्स्वे काले वापरां चिरम्।
ऋषयो दीर्घसंध्यत्वाद्दीर्घमायुरवाप्नुयुः॥

'आवश्यकं' मूत्रपुरीषादिकर्म। 'चिरं' इत्युभयसंध्यासंबन्धः। 'दीर्घसंध्यत्वं' जपेन दीर्घकालव्याप्ता।

[मनुः]—[२, २२२]

आचम्य प्रयतो नित्यमुभे संध्ये समाहितः।
शुचौ देशे जपन् जप्यमुपासीत यथाविधि॥

तथा—[२, १०२]

पूर्वां संध्यां जपंस्तिष्ठेत् सावित्रीमर्कदर्शनात्।
पश्चिमां तु समासीनः सम्यगृक्षविभावनात्[2]॥

मनुः—[२, ७६-७९]

अकारं चाप्युकारं च मकारं च प्रजापतिः।
वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च॥
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥
एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्।
संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते॥

1 पराशरमाधवीये (I. i. ३००) इदं यमवचनत्वेन पठितम्.

2 एषः पाठः माधवाचार्येणापि धृतः। कुल्लूकमेधातिथी द्वितीयतुरीयपादावित्थं पठतः—'नैशमेनो व्यपोहति' 'मलं हन्ति दिवाकृतम्' इति.

'एतदक्षरं' प्रणवम्। 'वेदपुण्येन' वेदजपुण्येन।

सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः।
महतो ऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते॥

विष्णुपुराणे—[३, ११, १०१]

[1]नित्यकालमुपस्थानं संध्ययोः पार्थिवेष्यते।
अन्यत्र सूतकाशौचविभ्रमातुरभीतिभिः॥

'विभ्रमः' भयं विनाकुलता।

योगियाज्ञवल्क्यः

संध्या येन न विज्ञाता संध्या न च उपासिता।
जीवन्नेव भवेच्छूद्रो लोके भवति निन्दितः[2]।

मनुः—[२, ४४]

नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः॥

दक्षः—[२, २७]

संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत्॥

बौधायनः—[२, ७, १५]

अपि चात्र प्रजापतिगीतौ श्लोकावुदाहरन्ति—

अनागतां तु ये पूर्वामतिक्रान्तां तु पश्चिमाम्।
संध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः॥

1 'सर्वकाल' इति गोरखपुरमुद्रितविष्णुपुराणे। 'सूतिकाशोच' इति मूलमातृकायाम्.

2 वी. मि. आह्नि., २५६–चतुर्थपादो 'मृतः श्वा चोपजायते' इति.

सायं प्रातः सदा संध्यां न ये विप्रा उपासते ।
कामं तान् धार्मिको राजा शूद्रकर्मसु योजयेत् ॥ इति ।

शातातपः

अनागतां तु यः पूर्वां सादित्यां चैव पश्चिमाम् ।
नोपासीत द्विजः संध्यां स धृष्टो ब्राह्मणः स्मृतः ॥

अङ्गिराः

उभे संध्ये तु यो विप्रो मौनी काले समाहितः ।
दिव्यवर्षसहस्रं तु ब्रह्मलोके महीयते ॥

अत्र शङ्खवसिष्ठाङ्गिरोबृहस्पतिपैठनसिबौधायनाः[1]

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

बृहस्पतिः—[आचार, ३१]

बद्ध्वासनं नियम्यासून् स्मृत्वा ऋष्यादिकं तथा ।
संनिमीलितदृङ् मौनी प्राणायामं समभ्यसेत् ॥

शङ्खः—[१२, ७-१२]

आदौ देवतामार्षं च्छन्दश्च संस्मरेत्। [ततः सप्रणवा व्याहृतीरादावावर्त्य गायत्रीमावर्तयेत् ।] अथास्याः सविता देवता, ऋषिर्विश्वामित्रः, गायत्री छन्दः। ॐकारस्य प्रणवाख्या । ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यमिति व्याहृतयः। आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवःस्वरोमिति शीर्षम् ।

1 बृ. आ., ३२; बौ. ध. सू. ४, १, २८; शङ्ख, ७, १४.

दक्षः—[२, ५१]

[1]सविता देवता यस्याः मुखमग्निस्त्रिपाच्च या ।
विश्वमित्र ऋषिश्छन्दो गायत्री सा विशिष्यते ॥

[2]योगियाज्ञवल्क्यः

प्राणस्यायमनं कृत्वा आचामेत् प्रयतोऽपि सन् ।
आन्तरं खिद्यते यस्मात् तस्मादाचमनं स्मृतम् ॥

1 अयं योगियाज्ञवल्क्यश्लोक इति वीरमित्रोदये (पृ. २७७).
2 वी. मि. आह्नि., २७७.

॥ ८ ॥

# अथाग्निकार्यम्

तत्र संध्याविध्यनन्तरम्—

याज्ञवल्क्यः—[१, २५]

अग्निकार्यं ततः कुर्यात् संध्ययोरुभयोरपि ।

मनुः—[२, १८६] भविष्ये च

दूरादाहृत्य समिधः संनिदध्याद्गृहोपरि[1] ।
सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥

एतेन शिष्यादौ धारणं निरस्तम् ।

आपस्तम्बः—[१, ४, १४-२१]

सदारण्यादेधानाहृत्याधो निदध्यात् ।

अधोनिधानोपरिधानयोर्विकल्पः ।

नास्तमिते समिद्धारो गच्छेत् । अग्निमिद्ध्वा परिसमूह्य समिध आदध्यात् सायं प्रातर्यथोपदेशम् । सायमेवाग्नि-पूजेत्येके । समिद्धमग्निं पाणिना परिसमूहन्नेव समूहन्या । प्राक् तु यथाकामी ॥

1 'संनिदध्याद्विहायसि' इति कुल्लूकधृतपाठः । मित्रमिश्रेणापि स एव परिगृहीतः । अपरार्केण (पृ. ५१) श्लोकोऽयं भविष्यपुराणात् उद्धृतः ।

'समिद्धारः' समिधामाहर्तारः। 'यथोपदेशं' गृह्योक्तविधिनापि परिसमूहनं कुर्यादित्यर्थः।

नाग्न्युदकशेषेण वृथाकर्माणि कुर्वीताचामेद्वा।

'वृथा कर्माणि' केवलदृष्टप्रयोजनानि।

बैजवापः

पुरास्तमयात् प्रागुदीचीं दिशं गत्वाहिंसन्नरण्यात् समिध आहरेत्। शुष्का ब्रह्मवर्चसकामः आर्द्रा अन्नाद्यकामः उभयैरुभयकामः। अस्तमिते तस्मिन्नग्नौ पूर्ववदादध्यात्॥

'पुरास्तमयात्' इत्यस्तमिते सूर्ये समिदाहरणं निषिद्धम्। 'प्रागुदीची' ऐशानी। 'अहिंसन्' समिदुपयुक्तादधिकमच्छिन्दन्। 'अस्तमिते' सूर्ये। 'तस्मिन्नग्नौ' आहवनीयानले। 'पूर्ववत्' उपनयनकालवत्। 'आदध्यात्' समिधमिति शेषः।

पैठीनसिः

समासिञ्चत्विति पर्युक्ष्य सायं प्रातः परिचरेदग्निं सूर्याचन्द्रमसौ सोमं मित्रं वायुमपो ब्राह्मणांश्चेति।

'परिचरेत्' अभिवादयेदित्यर्थः।

हारीतः

पुरा जग्राह वै मृत्युर्हिंसयन् ब्रह्मचारिणम्।
अग्निस्तं मोक्षयामास तस्मात्परिचरेद्धि तम्॥
ब्रह्मचारी यदा त्वग्नावादध्यात्समिधो न हि।
गृह्णीयात्तं तदा मृत्युरादध्यात्समिधस्ततः॥

॥ ९ ॥

# अथाभिवादनोपसंग्रहणे

तत्र शङ्खः—[२, ४]

प्रयतः कल्यमुत्थाय स्नातो हुतहुताशनः ।
कुर्वीत प्रणतो भक्त्या गुरूणामभिवादनम् ॥

विष्णुः—[२८, १४]

कृतसंध्योपासनश्च गुरूणामभिवादनं कुर्यात् ।

गौतमः—[६, ५]

स्वनाम प्रोच्याहमयमित्यभिवादो ज्ञसमवाये ।

'ज्ञसमवाये' प्रत्यभिवादनविधिज्ञसमागमे[1] ।

मनुः—[२, १२४-१२५]

भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।
नाम्ना स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः ॥
आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥

'नाम्ना' अभिवाद्यस्य । 'भोभावः' भो इति शब्दः । 'अस्य' अभिवाद्यस्य ।

1 'ज्ञसमवाये' प्रत्यभिवादनविधिज्ञसमवाय इत्यर्थः—मस्करिः (पृ. १०७).

'अभिवादयीत' इत्यनुवृत्तौ—

<u>सांख्यायनगृह्यम्</u>—[४, १२, ५-६]

असावहं भो इत्यात्मनो नामादिश्य व्यत्यस्तपाणिः असावित्यस्य पाणिं संगृह्याशिषमाशास्ते।

'अस्य' अभिवादकस्य।

<u>मनुः</u>—[२, १२६]

योन वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम्।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः॥

'अभिवादस्य' अभिवादनस्य। 'प्रत्यभिवादनं' आशीर्वचनम्, यथा 'आयुष्मान् भव देवदत्त' इति। 'नाभिवाद्यः' सर्वथैव नाभिवादयेदित्यर्थः।

<u>आपस्तम्बः</u>—[१, ५, १२]

ब्रह्मचारी सदा महान्तमपररात्रमुत्थाय गुरोस्तिष्ठन् प्रातरभिवादमभिवादयीतासावहं भो इति।

अभिवादनं 'अभिवादः' तं कुर्यादित्यर्थः। ओदनं पाकं पचतीतिवत्।

पुनः <u>आपस्तम्बः</u>—[१, ५, १६-१७]

दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयीत, उरःसमं राजन्यो, मध्यसमं वैश्यो, नीचैः शूद्रः, प्राञ्जलिः। प्लावनं च नाम्नोऽभिवादनप्रत्यभिवादने च पूर्वेषां वर्णानाम्॥

'नीचैः शूद्रः' मध्यापेक्षया नीचत्वम्। 'प्लावनं' प्लुतकरणम्। 'नाम्नो' नामधेयान्त्यस्वरस्येत्यर्थः। 'पूर्वेषां' ब्रह्मक्षत्रविशाम्। 'अभिवाद्य' इति वाक्यशेषः।

वसिष्ठः—[१३, ४४–४६]

योो विद्यादभिवदितुमयमहं भो इति ब्रूयात्। यश्च न विद्यात्। प्रत्यभिवादनमामन्त्रिते स्वरोऽन्त्योऽस्य प्लवते संध्यक्षरमप्रगृह्यमायाउभावं च यथा भोभाविति॥

'यो विद्यादभिवदितुं' इति। अभिवादने कृते प्रत्यभिवादनं कर्तुमित्यर्थः। तं स्वनामग्रहणविशेषणेन अभिवादयेत्। यत्तु न जानीयात् प्रत्यभिवादनं तं प्रति 'अयमहं भो' इत्येव ब्रूयादित्यर्थः। 'च'शब्दात् स्त्रियश्च।

तथा च मनुः—[२, १२३]

नामधेयस्य ये केचिदभिवादं न जानते।
तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वास्तथैव च॥ इति

कथं पुनः प्रत्यभिवादनम्, तदाह—'आमन्त्रिते' संबोधने प्रथमान्ते, 'अस्य' नाम्नो, 'अन्त्यः' अन्त्यस्वरः, 'प्लवते' त्रिमात्रः कार्यः। 'संध्यक्षरं' एकारादि। 'अप्रगृह्यं' प्रगृह्यसंज्ञारहितम्। 'आयाउभावं' आईभावं आऊभावम्। 'च' शब्दात् प्लुतं च प्रपद्यत इति शेषः।

आपस्तम्बः—[१, १४, २०–२१]

अभिवादयेत्सर्वनाम्ना स्त्रियः। राजानं वैश्यं च नाम्ना, मातरमाचार्यदारं चेत्येके॥

'सर्वनाम्ना' 'अहं भोः अभिवादये' इत्येतावन्मात्रेण। 'नाम्ना' न सर्वनाम्ना, किं तु स्वनाम्नेत्येकीयं मतम्।

मनुः—[२, ७२]

व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः।

सव्येन सव्यः स्पृष्टव्यो दक्षिणेन तु दक्षिणः ॥

बौधायनः—[१, ३, २६–२८]

दक्षिणं दक्षिणेन सव्यं सव्येन चोपसंग्रहणं दीर्घमायुः स्वर्गं चेप्समानः। काममन्यस्मै साधुवृत्ताय गुरुणानुज्ञातो 'असावहं भो' इति श्रोत्रे संस्पृश्य मनःसमाधानर्थमधस्ताज्जान्वोरा पद्भ्याम् ॥

'आ पद्भ्यां' इति, जानुनी आरभ्य पादपर्यन्तं स्पृशेदित्यर्थः। 'मनःसमाधानार्थं' अभिवाद्यस्यावधानार्थमित्यर्थः

आपस्तम्बः—[१, ५, १८–२३]

उदिते त्वादित्य आचार्येण समेत्योपसंग्रहणम्। सदैवाभिवादनम्। उपसंग्राह्य आचार्य इत्येके। दक्षिणेन पाणिना दक्षिणं पादमधस्तादध्यभिमृश्य सकुष्ठिकमुपसंगृह्णीयात्। उभाभ्यामेवोभावभिपीडयतो[illegible]त्येके ॥

'उभाभ्यां' पाणिभ्यां, 'उभौ' पादौ, 'अभिपीडयत' सम्यक् पीडयता।

वसिष्ठः—[१३, ४१–४३]

गुरोः पादोपसंग्रहणं कार्यम्[1]। ऋत्विक्श्वशु[illegible]व्य-[मा]तुलानवरवयसः प्रत्युत्थायाभिवादयेत्। ये चैव पाद-[illegible]स्तेषां च भार्या गुरोश्च मातापित]रौ ॥

अयं तात्पर्यार्थः। ऋत्विगादीनामवरवयसां प्रत्युत्थानं संभाषणमात्रेण। 'ये चैव पादग्राह्याः' पादोपसंग्रहणयो-

1 आनन्दाश्रममुद्रिते स्मृतीनां समुच्चये वसिष्ठस्मृतौ (पृ. २०७)। फ्यूरर्संपादित-वसिष्ठस्मृतौ नास्ति.

ग्याः पूर्वोक्तेभ्यो षड्भ्योऽनन्तरोक्ता 'अवरवयसः' तेऽपि प्रत्युत्थाय संभाष्याः ।

गौतमः—[१, ५८]

गुरोः पादोपसंग्रहणं प्रातः ।

गुर्वधिकारे पैठीनसिः

उत्तानाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेत् ।

पुनः गौतमः—[६, १-४]

पादोपसंग्रहणं समवायेऽन्वहम् । अभिगम्य तु विप्रोष्य । मातृपितृतत्सबन्धूनां पूर्वजानां विद्यागुरूणां तद्गुरूणां च । संनिधाने परस्य ॥

'समवाये' मेलके । 'विप्रोष्य' प्रवासं कृत्वागत्य[1] । 'तत्सबन्धूनां' मातृपितृसमानजातीयबन्धूनां मातुलमातामहपितृव्यपितामहप्रभृतीनाम् । 'पूर्वजानां' ज्येष्ठभ्रातॄणाम् । 'विद्यागुरवः' अङ्गादिविद्याध्यापितारः । 'तद्गुरूणां' पूर्वोक्तगुरूणाम् । 'संनिधाने परस्य' एतेषां सर्वेषामेकत्र उपस्थाने यः परः प्रधानभूतस्तस्य प्रथमं कर्तव्यमुपसंग्रहणम् ।

आपस्तम्बः—[१, ५, १२-१५]

गुरोस्तिष्ठन् प्रातरभिवादनमभिवादयेदसावहं भो इति । समानग्रामे च वसतामन्येषामपि वृद्धतराणां प्राक् प्रातराशात् । प्रोष्य च समागमे । स्वर्गमायुश्चेप्सन् ॥

1 हरदत्तस्तु 'तद्बन्धूनां' इति पठित्वा तद्बन्धवो मातुलमातृष्वसृपितृव्यपितृष्वस्रादय इति व्याख्यातवान् । 'संनिपाते परस्य' इति च तस्य पाठः । (पृ. ४६) । वी. मि. सं., ४५८.

[1]सांख्यायनगृह्यम्—[४, १२, १-४]

अहरहराचार्यायाभिवादयेत्। गुरुभ्यश्च। समेत्य श्रोत्रियस्य। प्रोष्य प्रत्येत्याश्रोत्रियस्य॥

'समेत्य' दैववशात् समागमे। 'अश्रोत्रियस्य प्रोष्य प्रत्येत्य' न तु दैववशात् समागमेऽपीत्यर्थः।

[1]पैठीनसिः

लौकिकं वैदिकं चैव यच्चान्यद्धर्मसंहितम्।
यतो विद्यागमं कुर्यात्तं पूर्वमभिवादयेत्॥

'धर्मसंहितं' [धर्मसंबद्धम्। 'विद्यागमं' विद्याग्रहणम्।]

[2]मनुर्यमश्च प्रथमे, पैठीनसिश्चतुर्थे—
लौकिकं वैदिकं चापि तथाध्यात्मिकमेव च।
आददीत यतो ज्ञानं तं पूर्वमभिवादयेत्॥
सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः।
नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी॥
शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत्।
शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत्॥
ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यून स्थविर आयति।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते॥
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।
चत्वारि सम्यग्वर्धन्ते आयुः प्रज्ञा यशो बलम्॥

1 अपरार्क, पृ. ५४. वी. मि. सं., ४६०.
2 मनुरिति वी. मि. सं., पृ. ४६०. मनु, २, ११७-१२१.

'लौकिकं' अर्थशास्त्रादि[1]। 'आध्यात्मिकं' ब्रह्मप्रतिपादकविद्या। अध्याचरिते 'श्रेयसा' श्रेष्ठेन गुर्वादिना 'न समाविशेत्' न समुपविशेत्। 'तान्' प्राणान्।

भविष्ये

अभीति भगवान् विष्णुः वादयामीति शंकरः।
द्वावेतौ पूजितौ येन यः करोत्यभिवादनम्॥

मनुः—[२, १३२]

भ्रातुर्भार्योपसंग्राह्या सवर्णाहन्यहन्यपि।
विप्रोष्य तूपसंग्राह्या ज्ञातिसंबन्धियोषितः॥

'ज्ञातयः' पितृपक्षाः। 'संबन्धिनः' मातृपक्षाः श्वशुरादयश्च।

तथा—[२, २१२]

गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता॥

'पूर्णविंशतिवर्षेण' इति यौवनोपलक्षणम्। 'गुणदोषौ' च कामजौ सुखदुःखे[2]।

तथा—[२, २१६–२१७]

कामं तु गुरुपत्नीनां युवतीनां युवा भुवि।
विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन्॥

1 'लौकिकम्' लोकाचारशिक्षणम्। अथवा गीतनृत्यवादित्रकलानां ज्ञानं वात्स्यायनविशाखिलकलाविषयग्रन्थज्ञानं वा।—(मेधातिथिः).

2 कायजे सुखदुःखे गुणदोषावभिप्रेतौ स्त्रीगतौ च स्वाकृतिदुराकृतिलक्षणौ धैर्यचापले वा' इति मेधातिथिः।

विप्रोष्य पादग्रहणमन्वहं चाभिवादनम् ।
गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥

तथा—[२, २१०]

गुरुवत्प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः ।
असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः ॥

विष्णुः—[३२, ५]

हीनवर्णानां गुरुपत्नीनां प्रागभिवादनं न पादोपसंग्रहणम्[1] ।

अभिवादनानुवृत्तौ गौतमः—[६, ६–८]

स्त्रीपुंयोगेऽभिवादनतोऽनियममेके[2] । नाविप्रोष्य स्त्रीणाममातृपितृव्यभार्याभगिनीनाम् । नोपसंग्रहणं भ्रातुर्भार्याणां श्वश्र्वाश्च ॥

'स्त्रीपुंयोगे' विवाहकाले स्त्रीणां गुरुत्वात् प्रत्युत्थानाभिवादे 'अनियममेके' मन्यन्त इत्यर्थः। 'अभिवादनतः' अभिवादने ।

तथा—[६, ९]

ऋत्विक् श्वशुरपितृव्यमातुलानां तु यवीयसां प्रत्युत्थानमनभिवाद्याः ।

1 'दूरादभिवादनं न पादोपसंस्पर्शनम्' इति मुद्रितविष्णुस्मृतौ. (पृ. ७९).

2 "जायापतिविषये जायया भर्तुरभिवादने कर्तव्ये प्राप्त इत्यर्थः । यद्यपि भर्ता प्रत्यभिवादनार्हः, तथाऽप्यनियममेके इच्छन्ति अहमयमित्येवमादिनियमो नास्ति, येनकेनचित्प्रकारेण कर्तव्यमिति । न तु गौतमः ।स तु अहमयमित्येवमादिना नियमेनैव कर्तव्यमिति । वैदग्ध्यापेक्षया विकल्पः ।" मस्करिभाष्ये (पृ. १०८).

'यवीयसां' कनिष्ठानाम्। 'नोपसंग्रहणं भ्रातुर्भार्याणाम्' इत्यसवर्णाविषयम्।

भ्रातुर्भार्योपसंग्राह्या सवर्णाऽहन्यहन्यपि।

इति मनुवचनात्[1]।

'प्रत्युत्थेया नाभिवाद्याः' इत्यनुवृत्तौ—

गौतमः—[६, १०]

तथान्यः पूर्वः पौरोऽशीतिकावरः शूद्रो ऽप्यपत्यसमेन।

'अन्यः' अनन्तरोक्तर्त्विगादिभ्यः। 'पूर्व' इति वयोऽपेक्षया। 'पौरः' समानस्थानवासी। 'अशीतिकावरः' अशीतिरेवाशीतिका सा अवरा अवधित्वेन यस्य स तथेत्यर्थः। 'शूद्रो' यदि पितृसखो भवति सख्युः पिता वा भवति तदा 'अपत्यसमेन' ब्राह्मणेन प्रत्युत्थेय इत्यर्थः।

आपस्तम्बः—[१, १४, १०–११]

ऋत्विक्श्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवादयेत्। तूष्णीं वोपसंगृह्णीयात्॥

'अभिवादयेत्' अभिभाषेत। 'उपसंगृह्णीयात्' उप समीपे संगृह्णीयात् अनुपाल्यादिना। विद्यादिज्येष्ठे उपसंग्रहणम्, इतरस्मिन्नभिभाषणमात्रम्।

1 मनु, २, १३२—भ्रातुर्भार्योपसंग्राह्या सवर्णाहन्यहन्यपि।
विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः॥

"ऋत्विगादीनां आत्मनो यवीयसां प्रत्युत्थानमात्रेण पूजा कार्या न पुनस्तेऽभिवाद्या इति हरदत्तः। कल्पतरुमाधवाचार्यावप्येवम्। अन्ये तु अभिवादनसंभाषणयोर्द्वयोरपि स्मरणात् ज्ञानज्येष्ठानां संभाषणमभिवादनं अन्येषां अभिवादनमात्रमिति॥" (वी. मि. संस्कार., ४५७).

शातातपः

नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथंचन ।
ज्ञानकर्मगुणोपेता यद्यप्येते बहुश्रुताः ॥
ब्राह्मणाः सर्ववर्णानां स्वस्ति कुर्यादिति श्रुतिः ।
सवर्णैस्तु सवर्णानां कार्यमेवाभिवादनम् ॥

अङ्गिराः

अप्रणामगते शूद्रे स्वस्ति कुर्वन्ति ये द्विजाः ।
शूद्रोऽपि नरकं याति ब्राह्मणस्तदनन्तरम् ॥

देवीपुराणे

शूद्रोऽपि चाधिकाराढ्यो वादाक्षरसुगर्वितः ।
महापातकतुल्यं तु लभते विनयादृते[1] ॥

गुर्वनुवृत्तौ मनुः—[२, २०२]

दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ।
यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥

आपस्तम्बः—[१, १४, १२-१९]

त्रिवर्षपूर्वः श्रोत्रियोऽभिवादनमर्हति । ज्ञायमाने वयोविशेषे वृद्धतरायाभिवाद्यम् । विषमगतायागुरवे नाभिवाद्यम् । अन्वारुह्याभिवादयीत । सर्वत्र तु प्रत्युत्थायाभिवादनम् । अप्रयतेन नाभिवाद्यम्, तथा अप्रयतायाप्रयतश्च न प्रत्यभिवादयेत् । पतिवयसः स्त्रियश्च । न सोपानद्वेष्टितशिराः अवहितपाणिर्वाभिवादयीत ॥

1 'वादः' तर्कः (वी. मि. सं., ४६४).

'त्रिवर्षपूर्वः' त्रिभिर्वर्षैः पूर्वो ज्येष्ठ इत्यर्थः। 'विषमगताय' उ[...]स्थानगताय। 'अन्वारुह्य' इत्युपलक्षणम्। गुरवे विषपगतायाप्यभिवादयेत्। 'अवहितपाणिः' वस्त्वन्तरावसक्तपाणिः।

गौतमः—[९, ४७]

सोपानत्कश्चाशनासनाभिवादननमस्कारान् वर्जयेत्[1]।

श[...]लिखितौ

नोदकुम्भहस्तोऽभिवादयेत्। न भैक्ष्यं चरन्। न पुष्पादिपाणिः। नाशुचिः। न जपन्। न देवपितृकार्यं कुर्वन्। न परिषन्मध्ये स्वैरवाक्॥

[बौधायनः—[१, ३, ३२–३३]

समिद्धार्युदकुम्भप[ु]ष्पान्नहस्तो नाभिवादयेत्।] यच्चान्यदप्येवं युक्तम्। न समवाये॥

'समिद्धारी' समिधो वहन्। 'एवं युक्तं' तं नाभि[...]त्यर्थः। 'समवाये' परिषदि।

हारीतः[2]

जपयज्ञजलस्थश्च समित्पुष्पकुशानलान्।
उदकुम्भं च भैक्ष्यं च वहन्तं नाभिवादयेत्॥

'जपयज्ञजलस्थश्च' नाभिवादनकर्ता।

1 "उपानत्पादो भोजनासनाभिवादनदेवताप्रणामान् वर्जयेत्। चशब्दात् पादुकास्थश्च॥" इति मस्करिः। "कैश्चित्तु 'सोपानत्काशन' इति पठित्वा भोजनमिति व्याख्यातम्। नमस्कारो अभिवादनात् भिन्नो देवब्राह्मणाद्युद्देश्यकः॥" (वी. मि. सं., ४६४).

2 लघुहारीतस्यायं श्लोक इति मित्रमिश्रः—(वी. मि. सं., ४६५).

हारीतः

नान्येन कृतप्रणामोऽन्यमभिभाषेत । अभिभाषेत गुरून् ब्राह्मणांश्च । न प्रागाहाराद्वृषलान् ॥

'अन्यं' प्रणामकर्तुः ।

यमः[1]

अभिवादे तु यः पूर्वमाशिषं न प्रयच्छति ।
यद्दुष्कृतं भवेदस्य तस्माद्भागं प्रपद्यते ॥
तस्मात् पूर्वाभिभाषी स्याच्चाण्डालस्यापि धर्मवित् ।
सुरां पिबेति वक्तव्यमेवं धर्मो न लुप्यते ॥
स्वस्तीति ब्राह्मणे ब्रूयादायुष्यमिति राजनि ।
वर्धतामिति वैश्ये तु शूद्रे त्वारोग्यमेव च ॥
यत्सुखं त्रिषु लोकेषु व्याधिव्यसनवर्जितम् ।
यस्मिन् सर्वे स्थिताः कामाः सा स्वस्तीत्यभिसंज्ञिता ॥

'अभिवादे तु यः पूर्वमाशिषं न प्रयच्छति ।'

इत्याशिषः प्रस्तुतत्वात् सा आशीः 'स्वस्तीत्यभिसंज्ञिता' इति संबन्धः[2] ।

[3]मनुयमौ

ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव तु ॥

आतिथ्याधिकारे गौतमः—[५, ४२]

कुशलानामयारोग्याणामनुप्रश्नोऽन्त्यं शूद्रस्य ।

1 'यम' इति नाम नास्ति मूलमातृकायाम्—(वी. मि. सं., ४६५).
2 वी. मि. सं., ४६५.
3 मनु., २, १२७.

आपस्तम्बः—[१, १४, २३-२८]

कुशलमवरवयसं वयस्यं वा पृच्छेत्। अनामयं क्षत्रियम्। अनष्टं वैश्यम्। आरोग्यं शूद्रम्। नासंभाष्य श्रोत्रियमभिव्रजेत्। अरण्ये च स्त्रियम्।

'श्रोत्रियो' वेदाध्यायी तथानुष्ठाता च। 'अरण्ये स्त्रियं' भयादिनिवृत्त्यर्थम्।

यमः

क्षत्रियस्त्रियुगं हन्ति [1][वैश्यो हन्ति चतुर्युगम्।
हन्त्येकसप्ततियुगं शूद्रो ब्राह्मणमब्रुवन्॥

'युगं' जन्म। 'अब्रुवन्' अवज्ञया असंभाषमाणः।]

इति महाराजाधिराज श्रीमद्गोविन्दचन्द्रदेवमहासंधिविग्रहिक भट्टश्रीहृदयधरात्मज श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ ब्रह्मचारिकाण्डे अभिवादनोपसंग्रहणे

1 वी. मि. सं., ४६६.

॥ १० ॥

# अथ मान्याः

तत्र शङ्खः

अथ मान्याः । माता पिता पितुर्भार्या ज्येष्ठो भ्राता ज्येष्ठभगिनी ज्येष्ठश्यालः पितुः सखा गुरुराचार्यः पितृव्यमातुलश्वश्रूश्वशुरवृद्धाः[1] ।

हारीतः

गुरुशुश्रूषा नाम ज्ञानधर्मार्थनिमित्तं क्रियते । तत्र ज्ञाननिष्क्रयार्थं गुरुशुश्रूषां कुर्यात् । दिविष्ठा भूमिष्ठाश्च खलु गुरवः । अग्न्यादयो देवा दिविष्ठाः, तेषां जपहोमार्चनादिभिः शुश्रूषां कुर्यात् । भूमिष्ठाः खलु गुरवो, यथा ब्राह्मणो मातापितरौ ज्येष्ठो भ्राता, ज्येष्ठस्य पत्नी उपाध्याय उपाध्यायपत्नी दीक्षितः प्रव्रजितो राजा वयोवृद्धाः ज्ञानवृद्धास्तपोवृद्धाश्चेति । तेषामभिगमनाभिवादनार्घातिथ्यादिभिः शुश्रूषां कुर्यात् । एवं ह्याह—

मूलं धर्मस्य गुरवो ज्ञानस्य तपसस्तथा ।
[illegible] गुरवः सेव्याः पुरुषेण प्रयत्नतः ॥

1 'पितुर्भार्या' विमाता । (वी. मि. सं., ४७०).

भूमिष्ठा गुरवो येषां तुष्यन्ति सततं नृणाम् ।
देवा हि तेषां तुष्यन्ति नराणां पुण्यकर्मणाम् ॥
अतुष्टा [1][गुरवो येषां प्रणष्टास्ते नराधमाः ।
तुष्टास्तु[1]] येषां गुरवस्तेषां सर्वाः समृद्धयः ॥
गुरुमन्युप्रदग्धानां न शुभा विद्यते गतिः ।

'दीक्षितः' सोमक्रयादनन्तरम् । तत्पूर्वं तु 'दीक्षितश्च प्राक्क्रयात्' इति वयस्यत्वस्य गौतमेनाभिधानात् । 'राजा' अत्र महीपतिः, देवलवचनैकवाक्यत्वात्, न क्षत्रियमात्रम्[2]।

[3]देवलः

उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ॥
वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः ।
माता मातामही गुर्वी पितुर्मातुश्च सोदराः ॥
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवस्त्रियः ।

'गुर्वी' गुरुपत्नी । 'ज्येष्ठा' भगिनीति शेषः ।

तथा

इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो द्विधा ।
अनुवर्तनमेतेषां मनोवाक्कायकर्मभिः ॥
गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः ।
नैतैरुपविशेत्सार्धं विवदेन्नार्थकारणात् ॥
उद्दिष्टं साधयेदर्थं प्रतिषिद्धं च वर्जयेत् ।

1 Lines telescoped!
2 वी. मि. सं., ४७१.
3 वी. मि. सं., ४७१.

तत्पूज्यान् पूजयेन्नित्यं व्यसने न परित्यजेत् ॥

'व्यसने' विपदि ।

क्रोधं वाग्दण्डपारुष्ये उत्सेकं वैकृतान् स्वरान् ।
नर्म हासं विलासं च वर्जयेद्गुरुसंनिधौ ॥

'उत्सेको' गर्वः । 'नर्म' क्रीडा । 'हासः' परिहासः । 'विलासः' शृङ्गारचेष्टा ।

तथा

[1]जीवितार्थमपि द्वेषं गुरुभिर्नैव भावयेत् ।
उदितोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः ॥
गुरूणामपि सर्वेषां पूज्याः पञ्च विशेषतः ।
तेषामाद्यास्त्रयः प्रोक्तास्तेषां माता सुपूजिता ॥
यो भावयति या सूते येन विद्योपदिश्यते ।
ज्येष्ठो भ्राता च भर्ता च पञ्चैते गुरवः स्मृताः ॥

'भर्ता' पोषकः ।

आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः ।
पूजितव्या विशेषेण पञ्चैते भूतिमिच्छता ॥
यावत्पिता च माता च द्वावेतौ निर्विकारिणौ ।
तावत्सर्वं परित्यज्य पुत्रः स्यात्तत्परायणः ॥
पिता माता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि ।
स पुत्रः सकलं धर्मं प्राप्नुयात्तेन कर्मणा[2] ॥
नास्ति मातृसमं दैवं नास्ति पित्रा समो गुरुः ।
तयोः प्रत्युपकारो हि न कथंचन विद्यते ॥

1 वी. मि. सं., ४७२.

2 'नात्र संशयः' इति मित्रमिश्रपाठः (सं. ४७२).

सम्यगाराध्य वक्तारं विसृष्टस्तदनुज्ञया ।
शिष्यो विद्याफलं भुङ्क्ते प्रेत्य चापद्यते दिवम् ॥

'विसृष्टः' प्रस्थापितः ।

यो भ्रातरं पितृसमं ज्येष्ठं मूढोऽवमन्यते ।
तेन दोषेण संप्रेत्य निरयं घोरमृच्छति ॥
तस्मात्पितृवदाराध्यो ज्येष्ठो भ्राता च सर्वदा[1] ।
अपि मातरि लोकेऽस्मिन्नुपकाराद्धि गौरवम् ॥
ये नरा भर्तृपिण्डार्थं स्वान् प्राणान् संत्यजन्ति हि ।
तेषामथाक्षयान् लोकान् प्रोवाच भगवान् मनुः ॥
यं मातापितरौ क्लेशं सहेते संभवे नृणाम् ।
न तस्य निष्कृतिः शक्या कल्पकोटिशतैरपि ॥
योऽन्तर्नित्यं प्रियं कुर्यादाचार्यस्य विशेषतः ।
तेषु हि त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥
तेषां त्रयाणां शुश्रूषा परमं तप उच्यते ।
नैतैरनभ्यनुज्ञातो धर्ममन्यं समाचरेत् ॥

[2]तथा

सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥
यावत्त्रयस्ते जीवेरन् तावन्नान्यत्समाचरेत् ।
तेषां नित्यं तु शुश्रूषां कुर्यात् प्रियहिते रतः ॥

1 मित्रमिश्रस्त्वेवं पठति—(पृ. ४७३).
तस्मात्पितृवदाराध्यो गुरुर्ज्येष्ठो हितार्थिभिः ।
तस्य प्रसादान्मर्त्यो हि प्रेत्य चेह च नन्दति ॥
पुंसा धर्मनिविष्टेन पूज्यो भर्ता हि सर्वदा ।
अपि मातरि. etc.
2 वी. मि. सं., ४७३.

तेषामनुपरोधेन पारक्यं यद्यदाचरेत् ।
तत्तन्निवेदयेत्तेभ्यो मनोवाक्कायकर्मभिः ॥
त्रिष्वेतेष्विति कृत्यं हि पुरुषस्य समाप्यते ।
एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते ॥
इदं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् ।
गुरुशुश्रूषया त्वेव ब्रह्मलोकं समश्नुते ॥

विष्णुः—[३२, १–३]

राजर्त्विक्श्रोत्रियोऽधर्मप्रतिषेध्युपाध्यायपितृव्यमातामहमातुलश्वशुरज्येष्ठभ्रातृसंबन्धिनस्त्वाचार्यवत् पूजनीयाः । पत्न्यश्च तेषां सवर्णाः । मातृष्वसा ज्येष्ठा स्वसा च ॥

'अधर्मप्रतिषेधी' अधर्माद्यो निवारयति ।

शातातपः

अभिवाद्यो नमस्कार्यः पादयोर्वन्द्य एव च ।
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ॥
पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः ।

[1]भविष्यपुराणे

ब्राह्मणं पञ्चवर्षं तु दशवर्षं तु भूमिपम् ।
पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता ॥
इत्येवं क्षत्रियपिता वैश्यस्यापि पितामहः ।
प्रपितामहश्च शूद्रस्य विप्रः प्रोक्तो मनीषिभिः ॥

[2]मनुर्विष्णुश्च

वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।

1 वी. मि. सं., ४७४. 'दशवर्षं तु शतवर्षं तु' इति मनु, २, १३५.
2 मनु., २, १३६; विष्णु., ३२, १६.

एतानि मान्यस्थानानि गरीयो यथ्यद्युत्तरम् ॥

वसिष्ठः—[१३, ५६-५७]

विद्या वित्तं वयः संबन्धाः कर्म च मान्यम्। तेषां समवाये पूर्वः पूर्वः गरीयान् ॥

गौतमः—[६, २०-२४]

वित्तबन्धुकर्मजातिविद्यावयांसि मान्यानि परबलीयांसि। श्रुतं तु सर्वेभ्यो गरीयः। तन्मूलत्वाद्धर्मस्य। श्रुतेश्च ॥

'जातिः' आभिजात्यं, आधिक्यापादिका ब्राह्मणत्वादिर्वा[1]।

[2]अत्रायं निर्णयः—मनुना वित्तं सर्वजघन्यत्वेनोक्तम्, वसिष्ठेन तु विद्यामात्रात्। तत्र च वसिष्ठोक्तं वित्तोत्कृष्टत्वं न्यायार्जितधर्मोपयोगिवित्ताभिप्रायम्। एवं मनुगौतमवसिष्ठेषु कर्मण उत्कृष्टत्वमध्यमत्वजघन्यत्वानि श्रद्धादिकारणोत्कृष्टत्वादित्रैविध्याभिप्रायेण भूयस्त्वाभिप्रायेण वा बोद्धव्यम्। गौतमेन तु विद्याया वयोजघन्यत्वेनाभिधानं [illegible]भिप्रायम्। तेनैव 'श्रुतं सर्वेभ्योऽपि गरीयः' इत्युक्तत्वात्। 'वयो' अत्र दशाम्यवस्था। मनुवसिष्ठयोश्च वयोमात्रम्।

मनुः—[२, १३७]

पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च।

1 वी. मि. सं., ४७५.

2 अयं निर्णयः मित्रमिश्रैरपि तथैव प्रतिपाद्यते—वी. मि. सं., पृ. ४७५.

यत्र स्युः सोऽत्र मानार्हो शूद्रोऽपि दशमीं गतः ॥

'पञ्चानां' पूर्वोक्तवित्तादीनाम्। 'त्रिषु वर्णेषु' ब्राह्मणत्वादिषु। 'गुणवन्ति' प्रकर्षवन्ति। 'दशमी' नवत्यधिका वयोवस्था[1]।

वसिष्ठः—[१३, ५८-६०]

स्थविरबालातुरभारिकस्त्रीचक्रवतां पन्थाः समागमे परस्मै परस्मै प्रदेयः। [राजस्नातकयोः समागमे राज्ञा स्नातकाय देयः।] सर्वैरेव वध्वामुह्यमानायाम् ॥

'उह्यमानायां' विवाहकाले।

'पन्था देय' इत्यनुवृत्तौ—

मार्कण्डेयपुराणे—[३४, ४०-४१]

मूकान्धबधिराणां च मत्तस्योन्मत्तकस्य च।
पुंश्चल्याः कृतवैरस्य बालस्य पतितस्य च ॥

'पुंश्चली' व्यभिचारिणी।

'पन्था देय' इत्यनुवृत्तौ—

श[ङ्ख]लिखितौ

बालवृद्धमत्तोन्मत्तोपहतदेहभाराक्रान्तेभ्यः स्त्रियै गर्भिण्यै स्नातकप्रव्रजितविद्याशिल्पगुणप्रकृष्टेभ्यः।

1 "त्रिषु वर्णेषु ब्राह्मणादिषु पञ्चानां पूर्वोक्तानां वित्तादीनां मध्ये, यत्र पूर्वमभ्यधिकं भवति, स एव उत्तरस्मादपि मान्यः। तेन वित्तबन्धुयुक्तो वयोधिकात् मान्यः। वित्तादित्रययुक्तो कर्मवतो मान्यः। वित्तादिचतुष्टययुक्तो विदुषो मान्यः। 'गुणवन्ति' प्रकर्षवन्ति। तेन द्वयोर्वित्तादिमत्त्वे प्रकर्षो मानहेतुः। प्रकर्षश्च वित्तस्य न्यायार्जितत्वादिः। बन्धोरन्तरङ्गत्वादिः। वयसः अत्याधिक्यादिः। कर्मणः सर्वाङ्गसंपन्नत्वादिः। विद्याया विधिवद्ग्रहणादिः। 'दशमीं' नवत्यधिकावस्थाम्। शतवर्षाणां दशधा विभागे दशम्यवस्था नवत्यधिका भवति। एतादृशः शूद्रोऽपि द्विजानां मान्यः ॥" (वी. मि. सं., ४७५).

'उपहतदेहः' पापरोगादिना। 'गुणो' अत्र विद्यादि।

देवलबोधायनौ—[बो. ध. सू., २, ६, ३०]

पन्था देयो ब्राह्मणाय गवे राज्ञेऽपचक्षुषे।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च॥

आपस्तम्बः—[२, ११, ५–९]

राज्ञः पन्थाः ब्राह्मणेनासमेत्य। समेत्य तु ब्राह्मणस्यैव पन्थाः। यानस्य भाराभिनिहितस्यातुरस्य स्त्रिया इति सर्वैर्दातव्यः। वर्णज्यायसे चेतरैर्वर्णैः। अशिष्टपतितमत्तोन्मत्तानामात्मनः स्वस्त्ययनार्थेन सर्वैरेव दातव्यः।

गौतमः—[६, २५–२६]

चक्रिदशमीस्थानुग्राह्यवधूस्नातकराजभ्यः पथो दानम्। राज्ञा तु श्रोत्रियाय[1]।

याज्ञवल्क्यः—[१, ११७]

वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम्।
पन्था देयो नृपस्तेषां मान्यः स्नातश्च भूपतेः॥

इति मान्याः

1 चक्रं शकटं, ततः 'चक्री'। 'दशमीस्थो' दशम्यां दशायां वर्तमानः अत्यन्तवृद्धः। 'अनुग्राह्यो' रोगार्तः। 'वधूः' गर्भिणीत्येवमादिः। 'स्नातको' विद्याव्रतस्नातकः। 'राजा' अभिषिक्तः॥ (इति मस्करिः).

|| ११ ||

# अथाचार्यसंज्ञामाननक्रमौ

तत्र मनुः—[२, १४०]

उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥

'कल्पः' प्रत्यक्षवेदमूलकोऽनुष्ठानप्रतिपादको ग्रन्थः । कल्पग्रहणमङ्गोपलक्षणार्थम् । 'रहस्यं' उपनिषत् । प्रधानत्वात् पृथगभिधानम् ।

वसिष्ठः—[३, २१]

उपनीय तु यः कृत्स्नं वेदमध्यापयेत्स आचार्यः ।

'कृत्स्न' शब्दोऽत्र साङ्गत्वपरः । मन्त्रब्राह्मणसमूहस्य वेदपदेन लक्ष्यत्वात् ।

मनुः—[२, १४१–१४२]

एकदेशं तु वेदस्य वेदाङ्गान्यथवा पुनः ।
योऽध्यापयति वृत्यर्थमुपाध्यायः स उच्यते ॥
निषेकादीनि कर्माणि यः करोति यथाविधि ।
संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥

'वृत्यर्थं' आत्मजीवनार्थम् । 'निषेकादीनि' वेददानपर्यन्तानि संस्कारकर्माणि । 'संभावयति' संवर्धयति ।

तथा—[२, १४९]

अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।
तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तथा॥

याज्ञवल्क्यः—[१, ३४]

स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।
उपनीय दद्द्वेदमाचार्यः स उदाहृतः॥

यमः

सत्यवाग्धृतिमान् दक्षः सर्वभूतदयापरः।
आस्तिको वेदनिरतः शुचिराचार्य उच्यते॥
वेदाध्ययनसंपन्नो वृत्तवान् विजितेन्द्रियः।
इत्येतैर्लक्षणैर्युक्तो गुरुर्भवति नित्यशः॥

'आचार्य उच्यते' आचार्यवत् पूज्यो भवति। 'गुरुर्भवति' गुरुवत्पूज्यो भवतीत्यर्थः।

भविष्ये[1]

[2]उपाध्यायान् दशाचार्य आचार्याणां शतं पिता।
सहस्रं तु पितुर्माता गौरवेणातिरिच्यते॥
कृत्वोपाध्यायमादौ तु ये पूज्याः कथितास्तव।
महागुरुर्महाबाहो सर्वेषामधिकः स्मृतः॥

'सर्वेषामधिकः' सर्वेभ्यः पूज्यतमः। स च 'महागुरुः' 'अष्टादश पुराणानि' इत्यादिना वक्ष्यमाणश्लोकैरूहितः। सर्वज्ञत्वेन सहस्रशतसंख्याकाचार्याणामिदं मतम्।

1 'कल्पतरौ भविष्यपुराणे' इति वी. मि. सं., पृ. ४७८.
2 मनु, २, १४५.

अष्टादश पुराणानि रामस्य चरितं तथा।
विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥
कार्ष्णं च पञ्चमं ज्ञेयं यन्महाभारतं स्मृतम्।
सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते ॥
जयेति नाम एतेषां प्रवदन्ति मनीषिणः।
एवं विप्रकदम्बस्य वाचकः प्रवरः स्मृतः ॥

चतुर्णामपि वर्णानां स महागुरुरुच्यते।

यस्त्वेतानि समस्तानि पुराणानीह जानते।
भारतं च महाबाहो सर्वज्ञोऽसौ मतो नृणाम् ॥
तस्मात्स पूज्यो राजेन्द्र वर्णैर्विप्रादिभिः सदा।
किं त्वया न श्रुतं वाक्यं यथाह भगवन् विभुः ॥
अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।
तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥

मनुः—[२, १४३]

अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥

[1]हारीतः

क्षीरहोता आहार्यवृतो विशेषवृत इति।

श्रोत्रियोऽस्याग्नीनाधत्ते स 'क्षीरहोता'। तदलाभेऽन्यं नित्यार्थं वृणीते स 'आहार्यवृतः'। अथ यानन्यानुत्तरोत्तरेषु क्रतुषु वृणीते स 'विशेषवृतः'।

मनुः—[२, १४५]

उपाध्यायान् दशाचार्य आचार्याणां शतं पिता।

1 अपरार्के, पृ. ६६.

सहस्रं तु पितुर्माता गौरवेणातिरिच्यते[1] ॥

गौतमः—[२, ५७–५८]

आचार्यः श्रेष्ठो गुरूणाम् । मातेत्येके ।

शङ्खलिखितौ

न मातापित्रोरन्तरं गच्छेत् पुत्रः । कामं मातुरेवानुब्रूयात् । सा हि धारणी पोषणी च । न पुत्रः प्रतिमुच्येतान्यत्र सौत्रामणीयागाज्जीवन्नृणान्मातुः ॥

'मातापित्रोः' विवादे सति 'न अन्तरं गच्छेत्' औदासीन्यं कुर्यादित्यर्थः । 'कामं' यदीच्छेत्, 'अनुब्रूयात्' मातुरेवानुकूलं वदेत् ।

मातापित्रधिकारे नारदः[2]

तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ।
अभावे बीजिनो माता तदभावे तु पूर्वजः ॥

मनुविष्णू—[मनु, २, १४६–१४८, १५० ; विष्णु, ३०, ४४-४६]

उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥
कामान्माता पिता चैनं यदुत्पादयतो मिथः ।
संभूतिं तस्य तां विद्याद्यद्योनावभिजायते ॥

1 तथैव वसिष्ठः—१३, ४८.

उपाध्यायाद्दशाचार्य आचार्याणां शतं पिता ।
पितुर्दशशतं माता गौरवेणातिरिच्यते ॥

2 पृ. ५०, श्लो, ३७.

आचार्यस्तस्य यां जातिं विधिवद्वेदपारगः ।
उत्पादयति सावित्र्या सा सत्या साजरामरा ॥
ब्राह्मस्य जन्मनः कर्ता स्वधर्मस्य च शासिता ।
बालोऽपि विप्रो वृद्धस्य पिता भवति धर्मतः ॥

यमः

न जन्मना न पलितैर्द्विजैः स्थविर उच्यते ।
यो वै युवाप्यधीयानस्तं देवा स्थविरं विदुः ॥
न बन्धुभिर्न वित्तेन पलितैर्नैव हायनैः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥
अज्ञो हि बालो भवति पिता भवति मन्त्रदः ।
अज्ञं हि पुत्रमित्यूचुर्पितरं मन्त्रदायिनम् ॥

[मनुः—[१, १५३]

अज्ञो भवति वै बालः पिता भवति मन्त्रदः ।
अज्ञं हि पुत्रमित्यूचुः पितरं मन्त्रदायिनम्[1] ॥

मनुविष्णू—मनु, २, १५५; विष्णु, ३२, १८]

विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥

1 'पितेत्येव तु मन्त्रदम्' इति कुल्लूकपाठः

॥ १२ ॥

# अथ गुर्वाचार्यानुवृत्तिः

तत्र आपस्तम्बः—[१, ५, २३-२६, १, ६, १-३७, १, ७, १-२]

सर्वाह्णं सुयुक्तोऽध्ययनादनन्तरोऽध्याये। तथा गुरुकर्मसु। मनसा चानध्याये। आहूताध्यायी च स्यात्। सदा निशायां गुरुं संवेशयेत्तस्य पादौ प्रक्षाल्य संवाह्य। अनुज्ञातः संविशेत्। न चैनमभिप्रसारयीत। न खट्वायां सतोऽभिप्रसारणमस्तीत्येके। न चास्य सकाशे संविष्टोऽभिभाषेत। अभिभाषितस्त्वासीनः प्रतिब्रूयात्। अनूत्थाय तिष्ठन्तम्। गच्छन्तमनुगच्छेत्। धावन्तमनुधावेत्। न सोपानद्वेष्टितशिरा अवहितपाणिर्वासीदेत्। अध्वापन्नस्तु कर्मसु युक्तो वासीदेत्। न चेदुपासीदेत्। देवमिवाचार्यमुपासीताविकथयन्नविमना वाचं शुश्रूषमाणोऽस्य। अनुपस्थकृतः। अनुवाति वीतः। अप्रतिष्ठब्धः पाणिना। अनपाश्रितोऽन्यत्र। यज्ञोपवीती द्विवस्त्रः। अधोनीवीतस्त्वेकवस्त्रः। अभिमुखोऽनभिमुखम्। अनासन्नोऽनतिदूरे च। यावदासीनो बाहुभ्यां प्राप्नुयात्। अप्रतिवातम्। एकाध्यायी दक्षिणं बाहुं प्रत्युपसीदेत्। यथावकाशं बहवः। तिष्ठति नासीतानासनयोगविहिते। आसीने च न संवि-

शेत्। चेष्टति च चिकीर्षंस्तच्छक्तिविषये। न चास्य सकाशेऽन्वक्स्थानिनमुपसंगृह्णीयात्। गोत्रेण वा कीर्तयेत्। न चैनं प्रत्युपतिष्ठेदनूत्तिष्ठेद्वापि चेत् तस्य गुरुः स्यात्। देशात्त्वासनाच्च संसर्पेत्। नाम्ना तदन्तेवासिनं गुरुमप्यात्मान इत्येके। यस्मिंस्त्वनाचार्यसंबन्धाद्गौरवं वृत्तिस्तस्मिन्नन्वक्स्थानीयेऽप्याचार्यस्य। भुक्त्वा चास्य सकाशे नानूत्थायोच्छिष्टं प्रयच्छेत्। आचार्याय वा पर्यवदध्यात्। आचामेद्वा। किं करवाणीत्यामन्त्र्य। उत्तिष्ठेत्तूष्णीं वा। नापपर्यावर्तेत गुरोः प्रदक्षिणीकृत्यापेयात्[1] ॥

अयमर्थः। 'अनन्तरः' अव्यवहितः, वेदाध्ययनात्। 'अध्याये' अध्ययनार्हे दिने। 'तथा' इति गुरुकर्मस्वभियुक्तोऽनन्तरश्च स्यादित्यतिदिश्यते। 'मनसा चानध्याये' इति, अनध्यायेतर इत्यनुषज्यते। अनेन मानसमभ्यासं कुर्यादित्यर्थः। 'आहूताध्यायी स्यात्' आचार्येणाध्ययनार्थ-

1 सर्वं च तदहश्च 'सर्वाह्णम्', सदा। 'सुयुक्तः' सुसमाहितः, अनन्यचित्तः। 'अध्ययनादनन्तरः' अध्यनाद्यथा आत्मानं नान्तरयति, यथा अध्ययनात् न विच्छिद्येत तथा स्यात्। 'अध्याये' स्वाध्यायकाले। 'अध्यायेत्' इति अपपाठः (१, ५, २३)। सन्देहस्थानेषु अनध्ययनकाले मनसा निरूपयेत्। (१, ५, २४) ॥ आचार्येण आहूतः सन्नेव अध्ययने प्रवर्तयेत्। (१, ५, १५) ॥ 'एनं' आचार्यं प्रति पादौ न प्रसारयेत्। (१, ६, ३) ॥ आपस्तम्बस्य पक्षः गुरुः खट्वायां शेते तं प्रति शिष्यस्य पादप्रसारणं न कार्यं इति (१, ६, ४) ॥ 'संविष्टः' शयानः (१, ६, ५)॥ 'अध्वापन्नः' अध्वानं प्राप्तः (१, ६, ११)। 'उपसीदेत्' उपविशेत् (१, ६, १२) ॥ 'अविकथयन्' व्यर्थकथामकुर्वन्। 'अविमनाः' अविक्षिप्तमनाः। 'अस्य' आचर्यस्य (१, ६, १३) ॥ 'पाणिना प्रतिष्टब्धः' पाणितलं भूमौ कृत्वा न स्यात् (१, ६, १६) ॥ 'अन्वक्स्थानिनः' आचार्यव्यतिरिक्ता गुरवः, यथा आचार्यः श्रेष्ठो गुरूणाम् (१, ६, २९) ॥ 'एनं' अन्वक्स्थानिनम् ॥ 'इत्येके' इति स्मरणात्। आपस्तम्बस्य पक्षस्तु गुरोर्नामग्रहणं न कर्तव्यमिति। (१, ६, ३३) ॥ यस्मिंस्तु पुरुषे शिष्याचार्यभावरहितेपि, तस्मिन् विद्याचारित्र्यादिनालौकिकगौरवे सति, तस्मिन् शिष्यस्य गौरवं अन्वक्स्थानीये (१, ६, ३४) ॥ उत्थाय गन्तुमिच्छन् गुरोः अपसव्यं न पर्यावर्तेत (१, ७, २.) ॥ (हरदत्तः)

माहूत एवाधीयीत। एतस्य कर्म करोमीति बुद्ध्याध्ययनार्थं प्रेरयेदित्यर्थः। 'संवेशयेत्' शाययेत्। 'संवाद्य' संमृद्य। 'एनं' गुरुम्। 'अभिप्रसारयीत' पादावित्यनुषज्यते। तेन 'खट्वायां' इत्यनन्तरोक्तपादप्रसारणवर्णननिषेधः। अतः खट्वायां सतो गुरोर्नासक्तशिष्यस्य पादप्रसारणं विरुद्ध्यते। 'अनूत्थाय' प्रतिब्रूयादित्यनुषङ्गः। 'अवहितपाणिः' दण्डाद्युपरुद्धपाणिः। 'अध्वापन्नस्तु' इति, अत्र सोपानत्कादिरप्यासीदेदित्यर्थः। 'न चेदुपासीदेत्' यदि तदीयाज्ञाग्रहणविज्ञापनाय प्रवृत्तो न भवेत्। 'अनुपस्थकृतः' इतरचरणव्यत्यासेनानुपविष्टः। 'अनुवाति' वाते इति शेषः। 'वीतः' विगतयच्चिह्नो, वाति वायौ गुरोस्तस्यां दिशि न तिष्ठेदित्यर्थः। 'अप्रतिष्ठब्धः' पाणिना भूम्यादावकृतालम्बः। 'अनपाश्रितोऽन्यत्र' अन्यत्र कुड्यादौ, अनाश्रितपृष्ठपार्श्वः। 'यज्ञोपवीती द्विवस्त्रः' सन् यज्ञोपवीतवदुपरि वस्त्रं दद्यात्। 'अधोनिवीतः' अधो वस्त्रस्यैकदेशेनानावृत्तः। 'यावदासीनो बाहुभ्यां प्राप्नुयात्' तावदासीदेदित्यन्वयः। 'अनासनयोगविहितः' आसनकल्पनामकृत्वा 'नासीत' इत्यन्वयः। 'चेष्टति' चेष्टां कुर्वति आचार्ये, 'तच्छक्तिविषये' तस्मिन् शक्तिविषये शक्ये, 'चिकीर्षेत्'। 'अन्वक्स्थानिनं' आचार्यान्न्यूनम्। 'गोत्रेण' न नाम्ना। 'एनं' अन्वक्स्थानिनम्। 'अपि चेत्तस्य गुरुः स्यात्' तस्य ब्रह्मचारिणः। 'नाम्ना तदन्तेवासिनम्' इत्यत्र 'न कीर्तयेत्' इत्यन्वयः। 'नाम्ना' पूज्यनाम्ना। 'यस्मिन्ननाचार्यसंबन्धाद्गौरवं वृत्तिः' इति, यस्मिन् द्विजोत्तमे, 'अनाचार्ये' आचार्यसंबन्धाद्विना, विद्योपादानाद्बहुश्रुत-

त्वाद्वयोऽधिकत्वात्स्वकर्मानुष्ठानात् 'गौरवं' प्रसिद्धं लोके, 'तस्मिन्नन्वकूस्थानीयेऽप्याचार्यस्य' 'वृत्तिः' शुश्रूषा यथाचार्ये तथा तस्मिन् कर्तव्या इत्यर्थः। 'भुक्त्वा चास्य' इति, आचार्यसकाशे भुक्त्वा 'नानूत्थायोच्छिष्टं प्रयच्छेत्'। 'आचार्याय वा पर्यवदध्यायात्' इति, ब्रह्मचारिणाऽऽचार्याय भुक्तशिष्टं समर्पणविहितं तन्नानूत्थितेन कर्तव्यम्। 'नापपर्यावर्तेत' कार्यवत्तया गन्तुमिच्छन् पृष्ठं दर्शयन्न गच्छेत्। किं तु 'प्रदक्षिणीकृत्य' 'अपेयात्'।

गौतमः—[२, २९-३७]

नामगोत्रे गुरोः समानतो निर्दिशेत्। अर्चिते श्रेयसि चैवम्। शय्यासनस्थानानि विहाय प्रतिश्रवणम्। अभिक्रमणं वचनाददृष्टेन। अधःस्थानासनतिर्यग्वातसेवायां गुरुदर्शने चोत्तिष्ठेत्। गच्छन्तमनुव्रजेत्। कर्म विज्ञाप्याख्याय। आहूताध्यायी। युक्तः प्रियहितयोः॥

'समानतः' सम्यगानतः। 'श्रेयान्' विद्यादिभिरुत्कृष्टः। स यदि लोके अर्चितो भवति तदा गुरौ यद्युक्तमाभिवादनादि तत्सर्वं शब्दातिदिष्टं कर्तव्यम्। 'स्थानं' अवस्थानम्, तद् 'विहाय' किंचिदुपसृत्येत्यर्थः। 'प्रतिश्रवणं' अत्र गुरोराज्ञाङ्गीकरणम्। 'अभिक्रमणं वचनाद् दृष्टेन' 'अदृष्टेन' गुरुणा 'वचनात्' आज्ञादानात् 'अभिक्रमणं' आभिमुख्येन गमनम्। कार्यमिति शेषः। 'तिर्यग्वातसेवा' मूत्रपुरीषोत्सर्ग इति कपर्दी। 'उत्तिष्ठेत्' तस्मात्स्थानात्स्थानान्तरं गच्छेत्। 'कर्म विज्ञाप्याख्याय' अनेन शिष्येणाचार्यस्य कर्म कर्तव्यं, तत्करोमीति

विज्ञाप्य, कृत्वा चाप्याख्याय तिष्ठेदित्यर्थः। 'युक्तः' अभियुक्तः, स्यादिति शेषः। 'प्रियं' आपातप्रियकरणम्। 'हितं' परिणतिसुखकरणम्।

मनुः—[२, १९१–२०३]

चोदितो गुरुणा नित्यमप्रचोदित एव वा।
कुर्यादध्ययने योगमाचार्यस्य हितेषु च[1] ॥
शरीरं चैव वाचं च बुद्धीन्द्रियमनांसि च।
नियम्य प्राञ्जलिस्तिष्ठेद्वीक्ष्यमाणो गुरोर्मुखम् ॥
नित्यमुद्यतपाणिः स्यात्साध्वाचारः सुसंयतः[2]।
आस्यतामिति चोक्तः सन्नासीताभिमुखो गुरोः ॥
प्रतिश्रवणसंभाषे शयानो न समाचरेत्।
नासीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ॥
आसीनस्य स्थितः कुर्यादभिगच्छंस्तु तिष्ठतः।
प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः ॥
पराङ्मुखस्याभिमुखो दूरस्थस्येत्य चान्तिकम्।
प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥
नीचं शय्यासनं चास्य सर्वथा गुरुसंनिधौ।
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥
नोदाहरेदस्य नाम परोक्षमपि केवलम्।
न चैवास्यानुकुर्वीत गतिभाषणचेष्टितम् ॥
गुरोर्यत्र परीवादो निन्दा वाभिप्रवर्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥

1 'अध्ययने यत्नं' इति पठित्वा 'उद्योगं' (अथवा) योगमिति कुल्लूकेन व्याख्यातम् ॥ 'योगं' इति मेधातिथिधृतपाठः। 'योगं' यत्नमिति च व्याख्या ॥

2 'सुसंवृतः' इति मेधातिथिधृतपाठः

परीवादात्खरो भवति श्वा वै भवति निन्दकः ।

सदोषकीर्तनं 'परीवादः'। इतरत् 'निन्दा'। 'परीवादात्' परीवादश्रावणात्, तस्य निषिद्धत्वेन निन्दाविषयत्वात्। पूर्वोक्तनिषेधश्चायमर्थवाद इति मेधातिथिः[1] ।

परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ॥
दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ।
यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥
प्रतिवातेऽनुवाते च नासीत गुरुणा सह ।
असंश्रवे चैव गुरोर्न किंचिदपि कीर्तयेत् ॥

तथा—[२, २१८]

यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥

'असंश्रवे' यस्मिन् देशे उच्यमानं व्यक्तं न श्रूयते ।

भविष्यपुराणे

आवृणवृत्ति गुरौ राजन्न किंचिदपि कीर्तयेत् ।

'आवृणवृत्ति' रहस्यं प्रच्छादयति ।

शङ्खलिखितौ

उपशिक्षितानि चास्य न कुर्वीतान्यत्राचारात्। न चाशिष्टकथाभिरभिवदेत् ॥

'उपशिक्षितानि' गुरोः सकाशात्, गुरुणा अकथितान्यपि स्वयमेव ज्ञातानि तदीयगतिभाषितचेष्टितानि

1 पूर्वप्रतिषेधोऽयमर्थवादः (मेधातिथिः)

अस्य गुरोः न कुर्वीत। 'न वाशिष्टकथाभिरभिवदेत्' न गुरुभिरनुपदिष्टानामर्थानां कथाभिः स्तोताभिमुख्ये वदेत्।

हारीतः

ऊर्ध्वरेताः गुरुणादिष्टानि व्रतानि समुद्वहन् गुरुशुश्रूषां कुर्यादिति। अथोदकुम्भकुशपुष्पसमिन्मूलफलाहरणं संमार्जनोपलेपनाङ्गशुश्रूषाप्रभृतिभिर्गच्छन्तं तिष्ठन्तं शयानं भक्त्यानुवर्तेत। सर्वदा सर्वकारी। व्रती। नास्य निर्माल्यशयनासने च्छायापादुके वाक्रामेत्॥

'ऊर्ध्वरेताः' वर्जितरेतःस्कन्दनः। 'अङ्गशुश्रूषा' अङ्गसंवाहनक्रिया। 'सर्वकारी' सर्वोचितकारी।

पैठीनसिः

दन्तकाष्ठशयनासनास्तरणसंवाहनप्रियवचनादिभिः गुरुं परितोषयेत्।

आपस्तम्बः—[१, २, १९–२०]

आचार्याधीनः स्यादन्यत्र पतनीयेभ्यः। हितकारी गुरोरप्रतिलोमयन् वाचा॥

'अप्रतिलोमयन् वाचा' इति, गुरुप्रतिकूलां वाचमवदन्।

शङ्खः

न स्नानेन न होमेन नैवाग्निपरिचर्यया।
ब्रह्मचारी दिवं याति स याति गुरुपूजनात्॥
हितप्रिये गुरोः कुर्यादहङ्कारविवर्जितः।

यमः

अनापृच्छ्य गुरुं चैव न गन्तव्यं कदाचन ।
यत्तु शिष्येण कर्तव्यं कार्यं दासेन वा पुनः ॥
आचार्ये तु वसंश्छिष्यो गुरुकार्ये तत्परः ।
दर्भेन्धनपरो नित्यमग्निकार्यपरः शुचिः ॥
कृताञ्जलिर्गुरुं ब्रूयादध्येष्ये भगवन्नहम् ।

'दासेन वा' इति, दासकर्म अपि शिष्येण कर्तव्यम् ।

'वर्जयेत्' इत्यनुवृत्तौ—

गौतमः—[२, २०–२१][1]

गुरुदर्शने कण्ठप्रावृतावसक्थिकापाश्रयणपादप्रसारणानि । निष्ठीवितहसितविजृम्भितावस्फोटनानि ॥

'कण्ठप्रावृतं' कण्ठावरणम् । 'अवसक्थिका' जानुनोरुपरि करबन्धः । 'अवस्फोटनं' अङ्गुल्याद्यङ्गस्फोटनम् ।

विष्णुः—[३२, १०–१२]

न च गुरुणा सह विगृह्यकथाः कुर्यात् । न चैवास्य परीवादम् । न चैवानभिप्रेतम् ॥

'विगृह्यकथा' विजिगीषुकथा ।

नारदः—[पृ. १४२, श्लो ८]

आविद्याग्रहणाच्छिष्यः शुश्रूषाप्रयतो भवेत् ।

1 The reference in S. B. E., Vol. II, p. 187 is different, viz. II, 14-15.

आपस्तम्बः—[१, ४, २२-२८]

स्वप्नं च वर्जयेत्। अथाहरहराचार्यं गोपायेत् धर्मार्थयुक्तैः कर्मभिः। स गुप्त्वा संविशन् ब्रूयात् 'धर्म गोपाय मा जूगुपमहं' इति। प्रमादादाचार्यस्य बुद्धिपूर्वं वा नियमातिक्रमं रहसि बोधयेत्। अनिवृत्तौ स्वयं कर्माण्यारभेत। निवर्तयेद्वा। अथ यः पूर्वोत्थायी जघन्यसंवेशी तमाहुर्न स्वपितीति। स य एवं प्रणिहितात्मा ब्रह्मचार्यत्रैवास्य सर्वाणि कर्माणि फलवन्त्यवाप्तानि भवन्ति। यान्यपि गृहमेधे॥

'स्वप्नं च वर्जयेत्' इति। 'गोपायेत्' पूर्वं परतश्चेति शेषः। 'अथ यः पूर्वोत्थायी जघन्यसंवेशी तमाहुर्न स्वपितीति' इत्यग्रे विधानात्। 'धर्मार्थयुक्तैः' धर्मोपयोगिभिः सामित्पुष्प[illegible]शाद्याहरणप्रभृतिभिः अर्थोपयोगिभिः ग्रासाहरणादिभिः। धर्म गोपाय मा जूगुपमहमिति माङि लुङ्। ततोऽयमर्थः। एवमाचार्यमहं रक्षाम्यथ मां धर्म रक्षेति। 'नियमातिक्रमः' अतिथिपूजाद्यकरणादि।

पैठीनसिः

धृतिमानलाभो श्लाघामन्यत्र गुरवे निवेदयेत्।

'इदं कृतमिदं करिष्य' इति निवेदयेत्।

बौधायनः—[१, ३, २१-२२]

सत्यवादी [illegible]मानहंकारः। पूर्वोत्थायी जघन्यसंवेशी। सर्वत्राप्रतिहत[illegible]वाक्योऽन्यत्र पातका[illegible]।

मनुः—[२, १९४]

हीनान्नवस्त्रवेषः स्यात्सर्वदा गुरुसंनिधौ।

आपस्तम्बः—[१, ७, ३१; १, ८, १–२२]

समावृत्तस्याप्येतदेव सामायाचारिकमेतेषु। यथा ब्रह्मचारिणो वृत्तम्। माल्यालिप्तमुख उपलिप्तकेशश्मश्रु-रक्तोऽभ्यक्तो वेष्टित्युपवेष्टिती काञ्चुक्युपानही पादुकी। उदाचारेषु चास्यैतानि न कुर्यात् कारयेद्वा। स्वैरिकर्मसु च। यथा दन्तप्रक्षालनोत्सादनावलेखनानि। तद्रव्याणां च न कथयेदात्मसंयोगेनाचार्यः। स्नातकस्तु काले यथाविध्य-भिहृतमाहूतोऽभ्येतो वा न प्रतिसंहरेदित्येके। उच्चैस्तरां नासीत। तथा बहुपादे। सर्वतः प्रतिष्ठिते। शय्यासने-ऽध्याचरिते नाविशेत्। यानयुक्तोऽध्वन्यन्वारोहेत्। सभानि-कषकटस्वस्तरांश्च। नानभिभाषितो गुरुमाभिभाषेत प्रिया-दन्यत्। व्युपतोदव्युपजापव्यभिहासोदामन्त्रणनामधेय-ग्रहणप्रेषणानीति गुरोर्वर्जयेत्। आपद्यर्थं ज्ञापयेत्। सह वसन् सायं प्रातरनाहूतो गुरुं दर्शनार्थो गच्छेत्। विप्रोष्य च तदहरेव पश्येत्। आचार्यप्राचार्यसंनिपाते प्राचार्यायोपसंगृह्योपसंजिघृक्षेदाचार्यम्। प्रतिषेधेदितरः। लुप्यते पूजा चास्य सकाशे। मुहूश्चाचार्यकुलं दर्शनार्थो गच्छेद्यथाशक्त्यधिहस्त्यमादायापि दन्तप्रक्षालनानीति॥

अयमर्थः—'ब्रह्मचारिणो समावृत्तस्य यथा' 'वृत्तं' वर्तनमनुष्ठानं 'एतदेव समावृत्तस्यापि सामयाचारिकम्'। 'समावृत्तस्य' विवाहात्प्राक् सामर्थ्यात् सह वसतः। 'माली' माल्यवान्। 'आलिप्तमुखः' समन्ताच्चन्दना-

दालिप्तमुखः[1]। 'उपलिप्तकेशश्मश्रुः' उपशब्दोऽत्र सम्यगर्थे कर्तनादिना सम्यक् कृते केशश्मश्रुणी यस्य सः। 'अक्तः' कृतनेत्राञ्जनः। 'अभ्यक्तः' कृताभ्यङ्गः। 'वेष्टितिः' शिरोवेष्टनवान्। 'उपवेष्टितिः' कृतकटिवेष्टनः। 'कञ्चुकी' कूर्पासकवान्। 'उपानही' 'पादुकी' इति च प्रसिद्धम्। 'उदाचारेषु' उत्कृष्टरूपाचारेषूपसंग्रहणादिष्वस्य गुर्वादेः क्रियमाणेषु एतानि मालित्वादीनि न कुर्यात् स्वं, अन्येन वा न कारयेदात्मनि। 'च'शब्दस्तुशब्दार्थे वर्तमानो मालित्वादीनामपवादमाह। 'स्वैरिकर्मसु च' आत्मविषयेषु एतानि मालित्वादीनि न कुर्यात्कारयेद्वा। स्वैरिकर्मण्याह—'यथा दन्तप्रक्षालनादीनि' इत्यादिना। 'अवलेखनं' कङ्कतकादिना केशप्रसाधनम्। अत्र प्रसंगेनाचार्यस्य धर्ममाह—'तद्द्रव्याणां' अन्तेवासिनो वस्त्रादिद्रव्याणाम्। 'आत्मसंयोगेन' आत्मसंयोगोऽत्र स्वस्वामिभावसंबन्धः, तेन हेतुना। 'न कथयेत्' कथां न कुर्यात्। लिप्तस्य तदीयगुणकथां न कुर्यादित्यर्थः[2]। पुनः समावृत्तधर्मानाह—'स्नातकस्तु काल' इत्यादिना। समावर्तनकाले 'यथाविध्यभिहृतं' समन्त्रकं यद्गृहीतं छत्रस्रगनुलेपनकुण्डलादि तदभिहृतः। 'अथाहूतो' गुरुणा स्वयं वा गुरुं प्रति 'अभ्येतः' गतः 'न प्रतिसंहरेत्' स्वशरीरादिति 'एके'[3] आचार्या आहुः। 'बहुपादे' असंघादौ।

1 मुखग्रहणमुपलक्षणं, 'मुखमग्रे ब्राह्मणोऽनुलिम्पेत' इति आश्वलायन [गृ. ३. ७, १०] वचनात्॥

2 आचार्यः शिष्यगृहमेत्य 'अहो दर्शनीयं भोजनपात्रम्' इत्यादि लिप्सा यथा गम्यते तथा न कथयेत्॥ हरदत्तः

3 ['एके' इति ग्रहणात्] स्व (आपस्तम्ब) पक्षस्तु तदपि (स्वयमेव) मुञ्चेत्॥ हरदत्तः

'अध्याचरिते' उपभुक्ते। 'यानयुक्तो अध्वन्यन्वारोहेत्' 'यानमारोह' इति गुरुणोक्तो अध्वनि पश्चादारोहेत्। 'सभानिकषे' गुरुणा आरोहेदित्यन्वयः। 'सभा' जनमेलकस्थानम्। 'कटः'[1] काष्ठादिघटितं निष्कृष्टमृत्तिकाक्षेत्रसमीकरणकाष्ठम्[1]। 'व्युपेतोदो' विविधमङ्गुल्यादिना तोदनम्। 'व्युपजापो'[2] विविधः समीपे कर्णेजापः। 'व्यभिहासः' गुरोराभिमुख्येन परिहासः। 'उदामन्त्रणं' उच्चैरदूरेऽबधिरे गुरावाह्वानम्। 'नामग्रहणं' पित्रादिकृतस्य नाम्नो ग्रहणं निषिद्धम्, नान्यस्य पूज्यनाम्नः। शिष्टचारे तथा दर्शनात्। 'आपद्यर्थे ज्ञापयेत्' 'आपदि' पीडायाम्। 'अर्थे' प्रयोजनम्। प्रयतस्य प्रकारान्तरेण ज्ञापयेदाचार्यम्। 'तदहरेव' इति, अहर्ग्रहणमुपलक्षणार्थम्। रात्रावपि तदानीमेव गच्छेत्। 'उपसंजिघृक्षेत्' उपसंग्रहणेच्छां प्रकटीकुर्यात् पाणिप्रसारणादिना। 'इतरः' आचार्यः। 'अस्य' आचार्यस्य। 'दर्शनार्थो गच्छेत्' इति, सामर्थ्यात् समावृत्तावेवायमेव। 'अधिहस्त्यं' अधिहस्ते भवमूलफलादीनि स्वयमेव हस्ते गृहीत्वा गच्छेदित्यर्थः।

[3]गुर्वनुवृत्तौ <u>शङ्खलिखितौ</u>

आसनशयनेषु नैकस्तिष्ठेदन्यत्र यज्ञसंस्तरशिबिकावाहनशकटोपयानाभ्युदयेभ्यः।

'उपयानं' शव एवानुगतः। 'अभ्युदयः' विवाहादावुपकर्ताध्वरि तिष्ठन्।

1 'स्वस्तरो' पलाशशय्या ॥ हरदत्तः
2 'व्युपजापो' श्रोत्रयोः मुहुर्मुहुः जल्पनम् ॥ हरदत्तः
3 १, ८, २२.

मनुः—[२, २०४]

गोऽश्वोष्ट्रयानप्रासादसंस्तरेषु कटेषु च ।
आसीत गुरुणा सार्धं शिलाफलकनौषु च ॥

बौधायनः—[१, ३, ३५]

नौशिलाफलककुञ्जरप्रासादकटकेषु चक्रवत्सु वाऽदोषं सहासनम् ।

'चक्रवत्सु' शकटादिषु ।

आपस्तम्बः—[१, ७, २०–२३]

विषमगते त्वाचार्य उग्रतः शूद्रतो वाऽऽहरेत् । सर्वदा शूद्रत उग्रतो वाऽऽचार्यार्थस्याहरणं धर्म्यमित्येके । दत्वा नानुकथयेत् । कृत्वा च नानुस्मरेत् ॥

'विषमगतः' आपद्गतः ।

हारीतः

अज्ञानपङ्कदिग्धं वै गुरुः शिष्यं तमोहतम् ।
द्रुतं प्रक्षालयति संस्कारज्ञानवारिणा ॥
ऋचं वापदि वार्धर्चं पादं वा यदि वाक्षरम् ।
सकाशाद्यदि गृह्णीयान्नियतं तत्र गौरवम् ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥
नाध्यापयति नाधीते परनीयेषु वर्तते ।
इत्येतैर्लक्षणैर्युक्तस्त्यक्तव्यो व्रतिना गुरुः ॥
सम्यक्प्रवृत्तं तु गुरुं शिष्यो यस्त्ववमन्यते ।
हरते दुष्कृतं चास्य तिर्यग्योनिं च गच्छति ॥

आपस्तम्बः—[१, १४, २-४]

अध्ययनार्थेन यं चोदयेन्न चैनं प्रत्याचक्षीत। न चास्मिन् दोषं पश्येत्। यदृच्छायामसंवृत्तौ गतिरेव तस्मिन्[1] ॥

मनुः—[२, १४४]

य आवृणोत्यवितथा कर्मणा[2] श्रवणावुभौ।
स माता स पिता ज्ञेयस्तं न द्रुह्येत्कदाचन ॥

विष्णुः—[३०, ४३]

लौकिकं वैदिकं चैव [3]तथाध्यात्मिकमेव च।
आददीत यतो ज्ञानं तं न द्रुह्येत्कदाचन।

वसिष्ठः—[२, १०-११]

य आवृणोत्यवितथेन कर्णा-
वदुःखं शृण्वन्नमृतं संप्रयच्छन्।
तं मन्येत पितरं मातरं च
तस्मै न द्रुह्येत्कतमच्च नाह ॥
अध्यापिता ये गुरुं नाद्रियन्ते
विप्रा वाचा मनसा कर्मणा वा।
यथैव ते न गुरोर्भोजनीया-
स्तथैव तान्न भुनक्ति श्रुतं तत् ॥

1 'यदृच्छया' दृष्टहेतुमन्तरेण बुद्धिमान्द्यादिना अध्ययनावस्था न संवृत्तिस्स्यात्; अधीतभागो माणवकान्तरं नागच्छेत्, तदा तस्यां आचार्यशुश्रूषा एव गतिः ॥ (हरदत्तः)

2 'ब्रह्मणा' इति मेधातिथिकुल्लूकधृतपाठः

3 'वाऽपि' इति नन्दपण्डितधृतपाठः

## तथातिदेशः

तत्र विष्णुः—[३२, १–२]

ऋत्विक्श्रोत्रियाधर्मप्रतिषेध्युपाध्यायपितृव्यमातामहमातुलश्वशुरगुरुज्येष्ठभ्रातृसंबन्धिनस्त्वाचार्यवत्पूजनीयाः। पत्न्यश्चैतेषां सवर्णाः।

मनुः—[२, २०५–२०७]

गुरोर्गुरौ संनिहिते गुरुवद्वृत्तिमाचरेत्।
न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत्॥
विद्यागुरुस्त्वेतदेव नित्या वृत्तिः स्वयोनिषु।
प्रतिषेधत्सु चाधर्मान् हितं चोपदिशत्स्वपि॥
श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत्।
गुरुपुत्रेषु चार्येषु गुरोश्चैव स्वबन्धुषु॥

'गुरोः' उपनीय वेददातुः। 'गुरुवत्' एवंरूपमेव। 'अनिसृष्टः' अनादिष्टः। 'स्वान्' गुरुपुत्रादीन्। 'विद्यागुरुः' उपाध्यायः। 'नित्या' सार्वकालिकी। 'स्वयोनिषु' पितृव्यादिषु। 'श्रेयःसु' विद्यातपःसमृद्धेषु। 'आचार्येषु' त्रैवर्णिकेषु।

आपस्तम्बः—[१, १४, ७–९]

मातरि पितर्याचार्यवच्छुश्रूषा। समावृत्तेन सर्वे गुरव उपसंग्राह्याः। प्रोष्य च समागमे। भ्रातृषु भगिनीषु च यथापूर्वमुपसंग्रहणम्। नित्या च पूजा यथोपदेशम्॥

'यथापूर्वं' यथाज्यैष्ठ्यम्। 'यथोपदेशं' सव्येन सव्य इत्याद्युक्तप्रकारेण।

पुनः आपस्तम्बः—[१, १३, १२–१८]

न बहिर्वेदे गतिर्विद्यते। समादिष्टमध्यापयन्तं यावदध्ययनमुपसंगृह्णीयात्। नित्यमर्हन्तमित्येके। न गतिर्विद्यते। वृद्धानां तु। ब्रह्मणि मिथो विनियोगे न गतिर्विद्यते। ब्रह्म वर्धत इत्युपदिशन्ति ॥

'न बहिः' इति, यद्वेदाद्बहिर्भूतं बौद्धादिशास्त्रं तद्यस्मादपयानं तस्य गतिर्न विद्यते। 'गतिः' इति स्मार्तानां दिक्। शुश्रूषायां 'समादिष्टः' आचार्येण प्रयोजनान्तरव्यपेक्षेण 'समादिष्टमध्यापयन्तं यावदध्ययनं उपसंगृह्णीयात्,' नान्यदा। 'अर्हन्तं' इतरं समावृत्तेन क्रियमाणमभिवादनं योऽर्हति तमर्हन्तं, समादिष्टाध्ययनादारभ्य विनाप्यध्ययनेन नित्यं समावृत्तोऽप्युपसंगृह्णीयात्। 'न गतिर्विद्यते वृद्धानां तु' इति, अधिकवयसमन्तेवासिनं विद्यागुरुरात्मशुश्रूषां न कारयेदित्यर्थः। 'ब्रह्मणि' वेदे 'मिथो विनियोगे' प्रदेशभेदेन परस्पराध्यापने सति 'न गतिर्विद्यते' न शुश्रूषास्ति। 'ब्रह्म वर्धत इत्युपदिशन्ति' इति, ब्रह्म वर्धत इति हेतोः शुश्रूषामुपदिशन्त्याचार्याः। सा चेह ब्रह्मवृद्धिः परस्पराध्ययनादेव सिद्ध्यतीति पृथक् शुश्रूषा न कार्या।

॥ १३ ॥

# अथ गुरुपुत्रभार्यानुवृत्तिः

तत्र मनुः—[२, २०८-२०९]

बालः समानजन्मा वा शिष्यो वा यज्ञकर्मणि ।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥

'यज्ञकर्मणि' यज्ञकर्मप्रतिपादकत्वेन यस्य वेदस्य तस्मिन् यः शिष्यः तं अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ।

उत्सादनं च गात्राणां स्नापनोच्छिष्टभोजने ।
न कुर्याद्गुरुपुत्रस्य पादयोश्चावनेजनम् ॥

'अध्याप्य तं' वेदान्तरं तत्प्रदेशान्तरं वा । 'उत्सादनं' उद्वर्तनम् । 'अवनेजनं' प्रक्षालनम् ।

'आचार्यवृत्तिः' इत्यनुवृत्तौ—

आपस्तम्बः—[१, ७, ३१]

वृद्धतरे सब्रह्मचारिणि ।

विष्णुः—[३२, ५-६]

हीनवर्णानां गुरुपत्नीनां प्रागभिवादनं न पादोपसंग्रहणं[1] । गुरुपत्नीनां गात्रोत्सादनाञ्जनकेशसंयमनपादप्रक्षालनादीनि न कुर्यात् ।

1 'दूरादभिवादनं', 'पादोपसंस्पर्शनं' इति नन्दपण्डितधृतपाठौ ।

वादः' लोकवादः। 'स्त्रीणां च प्रेक्षणालम्भं' इति मैथुनशङ्कायां स्त्रीणां स्निग्धदृष्टिनिपातनालिङ्गने। तथा च वर्जयेदित्यनुवृत्तौ गौतमः—[२, २२]

स्त्रीप्रेक्षणालम्भने मैथुनशङ्कायाम्[1]। इति

'यावदर्थानि' यावत्प्रयोजनानि।

यमः

अप्रकीर्णेन्द्रियो दान्तः क्षान्तः शुचिरकोपनः।
स्वाध्यायनिरतो दक्षो नैकाहारो जितेन्द्रियः॥
जितनिद्रो निरालस्यो जितक्रोधो जितात्मवान्।
शुश्रूषुरनहंकारी गुरुदेवार्चने रतः॥
खट्वासनं च शयनं वर्जयेद्दन्तधावनम्।
स्वपेदेकः कुशेष्वेव न रेतः स्कन्दयेत्क्वचित्॥

'अप्रकीर्णेन्द्रियो' अविक्षतेन्द्रियः। 'दान्तः' तपःक्लेशसहः।

बृहस्पतिः—[संस्कार., २२४, २२३]

यानि शास्त्रनिषिद्धानि तानि यत्नेन वर्जयेत्।
ध्यायादयं गुरुहितं कुर्याद्देवर्षिपूजनम्॥
उपनीतो द्विजो नित्यं गुरवे हि समाचरेत्।
स्रङ्मालाजिनसिक्थाद्यैर्न स्यादैक्षणिकः क्वचित्॥

'स्रङ्मालाः' स्रग्धारणम्। 'सिक्थं' मधूच्छिष्टं, अधरसंस्कारार्थम्। 'आद्य'शब्दादनुलेपनादिग्रहणम्।

1 स्त्रीणां 'प्रेक्षणं' अवयवशो निरूपणं न यादृच्छिकं दर्शनम्। 'आलम्भनं' स्पर्शनम्। ते अपि वर्जयेत्। 'मैथुनशङ्कायां' इति वचनाद्बालवृद्धातुरासु स्वयं च तथाविधस्य न दोषः—हरदत्तः।

॥ १५ ॥

# अथ ब्रह्मचारिनियमाः

विष्णुः—[२८, ११]

श्राद्धकृल्लवणशुक्तपर्युषितनृत्यगीतस्त्रीमधुमांसाञ्जनोच्छिष्टप्राणिहिंसाश्लीलपरिमार्जनम् ।

'श्राद्धवर्जनं' अनभ्यर्थितस्य मन्तव्यम् ।

ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ।

इति याज्ञवल्क्यानुसारात् । 'कृल्लवणं' कृतलवणम् ।

गौतमः—[२, १८–१९]

नादित्यमीक्षेत । वर्जयेन्मधुमांसगन्ध[1]माल्यदिवास्वप्नाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभमोहवादवादनस्नानदन्तधावनहर्षनृत्तगीतपरिवादभयानि ॥

'वादो' बहुप्रलापः । 'वादनं' वाद्यानाम् । 'स्नानं' उपभोगार्थम् ।

वर्जनानुवृत्तौ गौतमः—[२, २३–२४]

द्यूतं हीनसेवामदत्तादानं हिंसामाचार्यतत्पुत्रस्त्रीदीक्षितनामानि । शुक्ता वाचः ॥

1 अत्र गन्धनिषेधो भोगार्थं न देवनिर्माल्यस्य । तथा च स्मृतिः—'देवताशिष्टमेव गृह्णीयात् ब्रह्मचारी' इति । (वी. मि. सं., ४९४).

'शुक्ताः' निष्ठुराः, परोद्वेगकारिण्य इति वचनात्।

आपस्तम्बः—[१, २, २२–२९]

नानुदेश्यं भुञ्जीत। तथा क्षारलवणमधुमांसानि। अदिवास्वापी। अगन्धसेवी। मैथुनं न चरेत्। उत्सन्नश्लाघः। अङ्गानि न प्रक्षालयीत। प्रक्षालयीत त्वशुचिलिप्तानि गुरोरसंदर्शे॥

'अनुदेश्यं' देवताद्यर्थसंकल्पितम्। 'उत्सन्नश्लाघः' त्यक्तश्लाघः, स्यादिति शेषः।

हारीतः

भैक्षवृत्तिरेकान्नं मधुमांसक्षारलवणान्नाशी, म्लेच्छाशुचिस्त्रीशूद्रासंभाषी।

बौधायनः—[१, ३, २४]

[1]यावदर्थं संभाषी स्त्रीभिः।

आपस्तम्बः—[१, ७, ३–११]

न प्रेक्षेत नग्नां स्त्रियम्। ओषधिवनस्पतीनामाच्छिद्य नोपजिघ्रेत्। उपानहौ छत्रं यानमिति च वर्जयेत्। न स्मयेत। यदि स्मयेतापिगृह्य स्मयेतेति हि ब्राह्मणम्। नोपजिघ्रेत् स्त्रियं मुखेन[2]। न हृदयेन प्रार्थयेत्। नाकारणादुप[illegible]त्। रजस्वलो रक्तदन्तसत्यवादी स्यादिति हि ब्राह्मणम्॥

1 'बहुभाषणात् अतिप्रसङ्गस्सम्भवेदिति'। गोविन्दस्वामी

2 'मुखेन' इति वचनात् यादृच्छिके गन्धधारणे न दोषः। हरदत्तः

'यदि स्मयेत' हसेत्तदा '[illegible]' पिधाय मुखमिति शेषः। 'नाकारणादुपस्पृशेत्' स्त्रियमित्यन्वयः। प्रस्तुतत्वात् 'जटिलो' धूलिधूसरः। 'रक्तदन्' रक्तदन्तः।

<u>मनुः</u>—[२, १५९]

अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम्।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता॥

'अहिंसया' नातिपीडया। 'भूत'शब्देनात्रानुशासनीयाः। 'अनुशासनं' शिक्षा। 'मधुरा' प्रिया। 'श्लक्ष्णा' अनुच्चैः वार्ता।

एतच्च प्रसङ्गाद्गुरुकृत्यमुक्तं <u>मनुना</u>—[२, १६०–१६३]

यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा।
स वै सर्वमवाप्नोति वेदान्तोपगतं फलम्॥
नारुंतुदः स्यादार्तोऽपि न परद्रोहकर्मधीः।
ययास्योद्विजते वाचा नालोक्यां तामुदीरयेत्॥
संमानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा॥
सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते।
सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति॥

'शुद्धे' निर्दोषे। 'सम्यग्गुप्ते' दोषफलरहिते। 'सर्वं' सायुज्यादिवेदान्तोपगतमुपनिषत्प्रतिपादितं [मोक्षफलम्]। अरुंतुदः' मर्मव्यथाकारी। 'नालोक्या' असाध्वी।

<u>शातातपः</u>

आप्यायते यथा धेनुस्तृणैरमृतसंभवैः।
एवं जप्यैश्च होमैश्च पुनराप्यायते द्विजः॥

30

हारीतः

[1]हयगजरथचैत्यवृक्षविषमारोहणफलप्रचयनसंधिसर्पण-कूपावरोहणमहानद्यवप्रतरणमहासाहसविरुद्धानि च वर्जयेत्। चलनप्रमादकरणदोषविधानचेष्टाशुक्लवदनादिवास्वप्न-विवर्जितमिति ॥

'चैत्यं' देवतायतनम्। 'संधिः' अत्र संकरावकाशः। 'महानद्यो' गङ्गाद्याः। 'महासाहसं' अत्र दुर्गमप्रदेशगमनादिकम्। 'विरुद्धं' राजादिद्विष्टगुर्वाश्रयणम्। 'चलनं' अध्ययनादावस्थिरत्वम्। 'प्रमादकरणं' अनवधानेनानुष्ठानम्।

आपस्तम्बः—[१, ३, ११-१५]

अनृत्तदर्शी। सभाः समाजांश्चागन्ता। अजनवादशीलः। रहःशीलः। गुरोरुदाचारेष्वकर्ता स्वैरिकर्मणि।

तथा—[१, ३, २१-२२]

दृढधृतिः। अग्लास्नुः[2]।

मनुः—[२, २२१, २१९]

सूर्येण ह्यभिनिर्मुक्तः शयानं कामचारतः।
निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥
मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः।
नैनं ग्रामेऽभिनिम्लोचेत्सूर्यो नाभ्युदियात्क्वचित् ॥

1 अपरार्क, पृ. ६४; वी. मि. संस्का., ४९७.

2 आप. ध. सू.–१, २३, ६–यथा–अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽदम्भोऽद्रोहः सत्यवचनमनत्याशोऽपैशुनमनसूया संविभागस्त्याग आर्जवं मार्दवं शमो दमः सर्वभूतैरविरोधः योग आर्यमानृशंसं तुष्टिरिति सर्वाश्रमाणां समयपदानि तान्यनुतिष्ठन् विधिना सार्वगामी भवति।

'नाभिनिम्लोचेत्' नास्तं गच्छेत्।

आपस्तम्बः—[१, २, ३१–३२]

जटिलः। शिखाजटो वा वापयेदितरान्।

हारीतः

जटी दीर्घनखरोमा।

मनुः—[२, २२३–२२४]

यदि स्त्री यद्यवरजः श्रेयः किंचित्समाचरेत्।
तत्सर्वमाचरेद्युक्तो यत्र वास्य रमेन्मनः॥
धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः॥

'अवरजः' शूद्रः। यत् 'श्रेयो' गुरुगृहलेपनमार्जनादि तत्स्त्रीशूद्राभ्यामप्यवाप्यमानं दृष्ट्वानुतिष्ठेत्।

गौतमः—[९, ४८–४९]

न पूर्वाह्णमध्यंदिनापराह्णानफलान् कुर्याद्यथाशक्ति धर्मार्थकामेभ्यः। तेषु तु धर्मोत्तरः स्यात्॥

पूर्वादीनि यथाशक्ति धर्मार्थे तत्साधनैर्यथासंख्यमवन्ध्यानि कुर्यादित्यर्थः। 'तेषु' धर्मादिषु मध्ये 'धर्मोत्तरः स्यात्' धर्मप्रधानो भवेत्[1]।

हारीतः

उपनयनादे मेखलादण्डाजिनयज्ञोपवीतधारी।

1 पूर्वाह्णे यथासंभवं जपादि कुर्यात्, मध्याह्ने अर्थाहरणोपायं, अपराह्णे गन्धमाल्यादिसेवनम्। तेषु धर्मार्थकामेषु धर्मः प्रधानस्स्यात्। इतरयोरासेवनादपि नियमेन धर्मः कर्तव्य इत्यभिप्रायः—मस्करिः। 'धर्माविरोधेनार्थकामौ सेवेत' इति हरदत्तः।

यमः[1]

दण्डं कमण्डलुं चैव मौञ्जीं च रशनां तथा ।
धारयेद्ब्रह्मचर्यं च भैक्षान्नाशी गुरौ वसन् ॥

मनुविष्णू—[मनु, २, ६४; विष्णु, २७, २८]

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥

अथ मनुर्विष्णुश्च द्वितीये—[मनु, २, १७३–१७४; विष्णु, २७, २८]

कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।
ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वकम् ॥
यद्यस्य विहितं कर्म यत्सूत्रं या च मेखला ।
यो दण्डो यच्च सवनं तत्तत्तस्य व्रतेष्वपि ॥

'व्रतेषु' औपनिषदादिषु ।

शङ्खलिखितौ

उपनयनादूर्ध्वं व्रतचर्या ।

मनुबृहस्पती—[मनु, २, १०८, बृह. प्रा. ६७]

अग्नीन्धनं भैक्षचर्यामधःशय्यां गुरोर्हितम् ।
आ समावर्तनात् कुर्यात् कृतोपनयनो द्विजः ॥

ब्रह्मचारिधर्मानुवृत्तौ गौतमः—[३, १०]

उत्तरेषां चैतदविरोधि ।

1 पराशरमाधवीये, (I, ii, पृ. ४४)

'एतत्' ब्रह्मचारिण उक्तं द्यूतवर्जनादि 'अविरोधि' यच्छास्त्रादितरेण वा बाधितं तत् 'उत्तरेषां' गृहस्थादीनामनु-वर्तयेत्। यत्तु बाधितं तन्निवर्तयेत्। यथोर्ध्वरेतस्त्वं गृहस्थस्य।

आचार्यानुवृत्तौ आपस्तम्बः—[१, ७, ३१]

समावृत्तस्याप्येतदेव सामयाचारिकमेतेषु।

हारीतः

उपनयनादि मेखलादण्डाजिनयज्ञोपवीतधारी।

'सामयाचारिकं' विधिनिषेधसंबन्ध इति कपर्दि-भाष्यम्।

पुनः आपस्तम्बः—[१, १३, ५]

न समावृत्ते समादेशो विद्यते।

'समादेशः' आचार्याज्ञयैव कर्मकरणम्।

अथ मनुः—[२, १६३–१६४)

अनेन क्रमयोगेन संस्कृतात्मा द्विजः शनैः।
गुरौ वसन् संचिनुयाद्ब्रह्माधिगमिकं तपः॥
तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना॥

आपस्तम्बः—[१, ५, १–२]

नियमेषु तपःशब्दः। तदतिक्रमे विद्याकर्म निःस्रवति ब्रह्म सहापत्यादेतस्मात्॥

'विद्याकर्म' विद्याग्रहणम्। 'निःस्रवति' क्षरति निर्वीर्यं भवतीति यावत्। 'ब्रह्म' वेदः। 'सहापत्यात्' अपत्य-सहिताध्येतुः।

तथा—[१, ५, ९-११]

गुरुप्रसादनीयानि कर्माणि स्वस्त्ययनमध्ययनसंवृत्तिरिति। अतोऽन्यानि कर्माणि निवर्तन्ते ब्रह्मचारिणः। स्वाध्यायधृग्धर्मरुचिस्तपस्व्यृजुर्मृदुः सिध्यति ब्रह्मचारी॥

'गुरुप्रसादनीयानि' आचार्यप्रसादकराणि पादप्रक्षालनादिकर्माणि। 'स्वस्त्ययनं' आत्मरक्षाकरणम्। रात्रौ वृक्षमूलमुपसर्पता रागदिना 'अध्ययनसंवृत्तिः' वेदाभ्यासः। 'अन्यानि' देवतायतनकरणादीनि। 'स्वाध्यायधृक्' स्वाध्यायधृतिः।

हारीतः

अथात्रोदाहरन्ति।

व्रतैश्छन्दांसि सिध्यन्ति कामदानि भवन्ति च।
छन्दसां साधनार्थाय व्रतानाह चरेद्बुधः॥

लघुव्यासः

संस्कारवद्भिः कर्तव्यः वेदस्याध्ययनं बुधैः।
शुद्धस्य फलवत्ता स्यादन्यथा निष्फलं स्मृतम्॥
ऋग्वेदमप्यधीयीत मार्गेणोक्तेन धर्मवित्।
न त्वेव चतुरो वेदानन्यायेन कदाचन॥
ऋग्यजुःसाम चैवं यन्न्यायतोऽधिगतं द्विजैः।
ब्रह्मत्वमापादयति नाक्रमेण [illegible]॥
वेदविप्लावनात्तेन वरं मौनं समाश्रितम्।
वेदविप्लावनाद्विप्रो नरकं यात्यधोमुखः॥

<u>अग्निवसिष्ठाङ्गिरसो</u> <u>यमश्च</u>—द्वितीये

यथाश्वा रथहीनास्तु रथो वाश्वैर्यथा विना ।
एवं तपोऽप्यविद्यस्य विद्या वाप्यतपस्विनः ॥
यथान्नं मधुसंयुक्तं मधु वान्नेन संयुतम् ।
एवं तपश्च विद्या च संयुक्तं भेषजं महत् ॥
विद्यातपोभ्यां संयुक्तं ब्राह्मणं जपनैत्यकम् ।
सदापि पापकर्माणं प्रतियुक्ते न पातकम् ॥

अथ <u>मनुः</u>—[१२, १०४]

तपो विद्या च विप्रस्य निःश्रेयसकरं परम् ।
तपसा किल्बिषं हन्ति विद्ययामृतमश्नुते ॥

<u>देवलः</u>

विद्या वित्तं तपश्चेति त्रीणि तेजांसि देहिनाम् ।
इह चामुत्र च श्रेयस्तदेतैः साध्यते त्रिभिः ॥
विद्यया विमलं ज्योतिर्वित्तयोगात्सुखोदयः ।
तपसा विमला भूतिः प्राप्यते त्रितयं त्रिभिः ॥

॥ १६ ॥

## ॥ अथाध्याप्याः ॥

तत्र बृहस्पतिः—[सं. २२२]

एवं दण्डादिकैर्युक्तं संस्कृत्य तनयं पिता ।
वेदमध्यापयेच्छान्तं शास्त्रं मन्वादिकं तथा ॥

यमः

संवत्सरोषिते शिष्ये गुरुर्ज्ञानमनिर्दिशन् ।
हरेत दुष्कृतं तस्य शिष्यस्य वसतो गुरुः ॥

गुरुशुश्रूषानुवृत्तौ आपस्तम्बः—[१, ८, २४–२८]

तस्मिन् गुरोर्वृत्तिः । पुत्रमिवैनमनुकांक्षन् सर्वधर्मेष्वनपच्छादयमानः सुयुक्तो विद्यां ग्राहयेत् । न चैनमध्ययनविघ्नेनात्मार्थेषूपरुन्ध्यादनापत्सु । अन्तेवास्यनन्तेवासी भवति विनिहितात्मा गुरावनैपुणमापद्यमानः । आचार्योऽप्यनाचार्यो भवति श्रुतात्परिहरमाणः ॥

'तस्मिन्' गुरुशुश्रूषके 'वृत्तिः' उच्यते । 'एनं' शुश्रूषकम् । 'अनुकांक्षन्' अविच्छन् । 'सर्वधर्मेषु' कष्टप्रतिपाद्येष्वपि । 'अनपच्छादयमानः' अवञ्चयन् । 'सुयुक्तो' नान्यमनाः । 'विनिहितात्मा' विविधप्रकारेण गुरौ समर्पितात्मा । अनेकेषु गुरुष्वेकस्यामेव विद्यायाम् ।

मनुः—[२, १०९]

आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्मतः ॥

‘ज्ञानदो’ विद्यान्तरप्रदः । ‘शक्तो’ ग्रहणधारणयोः । ‘स्वः’ ज्ञातिपुत्रादयः ।

याज्ञवल्क्यः—[१, २८]

कृतज्ञाद्रोहमेधाविशुचिकल्याणसूचकाः[1] ।
अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥

‘कल्याणसूचकः’ शुभलक्षणः । ‘शक्तः’ अत्र ग्रहणे । ‘अर्थदः’ अत्राभृत्यर्थमर्थप्रदाता । ‘भृतकाध्यापनं तथा’ इत्युपपातकमध्ये पाठात्[2] ।

गौतमः—[१०, ४]

आचार्यज्ञातिप्रियगुरुधनविद्यानियमेषु ब्रह्मणः संप्रदानमन्यत्र यथोक्तात् ।

‘धनविद्यानियमः’ परिवर्तः । ‘ब्रह्मणो’ वेदस्य । ‘अन्यत्र यथोक्तात्’ इति, शुश्रूषकादेरन्यत्रैतेष्वेव ।

विष्णुः—[२९-३-४]

नापरीक्षितं याजयेत् । नाध्यापयेत् ।

1 ‘कल्यानसूयकाः’ इति मिताक्षरा । ‘कल्यः’ आधिव्याधिरहित इति । ‘कल्याणसूचकः’ इति अपरार्कपाठे, शुभलक्षण इति (पृ. ५६) । ‘कल्यानसूयकः’ इति पाठे कल्यो नीरोगः । अपरार्कः

2 अर्थप्रदं प्रति अनेनाध्यापनं नाधर्मः । तस्य वृत्तित्वेन विहितत्वात् । भृतिसंप्रतिपत्तिपूर्वकमध्यापनं प्रतिषिद्धम् । अपरार्कः पृ. ६७.

आपस्तम्बः—[२, ६, १–२]

जात्याचारसंशये धर्मार्थमागतमग्निमुपसमाधाय जातिमाचारं च संपृच्छेत्। साधुतां चेत्प्रतिजानीतेऽग्निरुपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता साधुतां प्रतिजानीते साध्वस्मा अस्तु वितथ एष एनस इत्युक्त्वा शास्तुं प्रतिपद्येत ॥

'अग्निमुपसमाधाय' स्वगृह्योक्तविधिना[1] ।

मनुयमौ—[मनु, २, ११०]

नापृष्टः कस्यचिद्ब्रूयान्न वाऽन्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥

मनुः—[२, ११३–११५]

विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना ।
आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥
[2]विद्या ब्राह्मणमेत्याह शेवधिष्टेऽस्मि रक्ष माम् ।
असूयकाय मा मा दास्तथा स्यां वीर्यवत्तमा ॥
यमेव तु शुचिं विद्या नियतब्रह्मचारिणम् ।
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥

'शेवधिः' निधिः । 'इरिणे' अनूषरे ।

हारीतः

यो वै धीरः शुश्रूषुरध्यायवृत्तो
यस्मिन् शोचेन्न व्यथेन्नापि धर्मः ।

1 स चेत् 'साधुतां प्रतिजानीते', ततो 'अग्निरुपद्रष्टा' इत्यादिकं मन्त्रमुक्त्वा 'शास्तुं' शासितुं, अध्यापयितुं, धर्मांश्चोपदेष्टुं, 'प्रतिपद्येत' उपक्रमेत—हरदत्तः ।

2 छान्दोग्यब्राह्मणे—"विद्या ह वै ब्राह्मणमाजगाम, तवाहमस्मि, त्वं मां पालयानर्हते मानिने चैव मा दा, गोपाय मां, श्रेयसो तथाहमस्मि" ॥

तस्मै ज्ञानं श्रद्धया संदधेयं
नान्तर्दुष्टे कत्थने दुःखशीले ॥

'व्यथेत्' चलेत् ।

इत्यध्याप्याः

## अथ शिष्यशिक्षा

यमः

शिष्यशिष्टिरवधेन । अशक्तौ रज्जुवेणुविदलाभ्यां तनुभ्याम् । अन्येन घ्नन् राज्ञा शास्यः ।

मनुः—[८, २९९-३००]

भार्या पुत्रश्च दासश्च [प्रेष्यो] भ्राता सहोदरः ।
प्राप्तापराधास्ताड्याः स्यू रज्वा वेणुदलेन वा ॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन ।
अथोऽन्यथा तु प्रहरन्प्राप्तं स्याच्चौरकिल्बिषम् ॥

|| १७ ||

# अथाध्यापनविधिः

तत्र मनुः—[२, ७०-७५]

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥
ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥
अध्येष्यमाणं तु गुरुर्नित्यकालमतन्द्रितः ।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् ॥
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यति ॥
प्राक्कूलान्पर्युपासीनः पवित्रैरेव पावितः ।
प्राणायामैस्त्रिभिः पूतस्तत ॐकारमर्हति ॥

'प्राक्कूलान्' प्रागग्रान्। अध्ययनारम्भकाले पवित्रापादन,पावमान्यादिमन्त्रासंभवाद्दर्भैः पावनं गौतमोक्त इन्द्रियाणामुपस्पर्शनम्[1] ।

1 प्राणोपस्पर्शनं दर्भैः । प्राक्कूलेष्वासनं च । गौतमः [१, ५४, ५६].

तथा—[२, ७६–७७]

अकारं चाप्युकारं च मकारं च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च ॥
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥

गौतमः—[१, ५२–६२][1]

पाणिना सव्यमुपसंगृह्यानङ्गुष्ठमधीहि भो इत्याऽऽमन्त्रयेत गुरुम् । तत्र चक्षुर्मनाः । प्राणोपस्पर्शनं दर्भैः । प्राणायामास्त्रयः पञ्चदशमात्राः । प्राक्कूलेष्वासनं च । ओँकारपूर्वा व्याहृतयः पञ्च सत्यान्ताः । गुरोः पादोपसंग्रहणं प्रातः । ब्रह्मानुवचने चाद्यन्तयोः । अनुज्ञात उपविशेत्प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वा । सावित्री चानुवचनमादितो ब्रह्मण आदाने । ओँकारोऽन्यत्रापि ॥

'पाणिना' दक्षिणेन 'सव्यं' पाणिं आत्मीयं ब्रह्माञ्जलिर्यथा भवति तथा हस्तौ कृत्वेत्यर्थः । 'तत्र' गुरौ मनश्चक्षुषी व्यापृक्ते यस्य सः 'तत्र चक्षुर्मनाः' । 'प्राणाः' इन्द्रियाणि । 'मात्राः' ह्रस्वाक्षरकालाः । 'सत्यान्ताः' भूर्भुवः स्वः पुरुषः सत्यमित्येवंप्रकाराः । व्याहृतीनां पुरुषान्तरपाठात् सत्यान्ता इत्यभिधानम् । 'ब्रह्मण आदितः' आरम्भे सावित्री च वक्तव्या ।

आपस्तम्बः—[१, १०, १५–१६]

गुरुसंनिधौ चाधीहि भो इत्युक्त्वाधीयीत । अध्यापयेद्वा ।

1 स्टेन्स्लर पुस्तके—१, ४६–६१ इति.

शङ्खलिखितौ

आहूताध्यायी पवित्राञ्जलिपाणिः सपवित्रं गायत्रीमनुश्राव्य गुरोरभिमुखः स्वाध्यायमनुपठेत् ।

यमः

कृताञ्जलिर्गुरुं ब्रूयादध्येष्ये भगवन्नहम् ।
जितेन्द्रियः शुक्लवासा ब्रह्माञ्जलिकृतः स्थिरः ॥

'ब्रह्माञ्जलिकृतः' कृतब्रह्माञ्जलिः । आहिताग्न्यादेराकृतिगणत्वात् कृतशब्दस्य परनिपातः ।

ॐकारं प्रथमं कृत्वा ततो ब्रह्म प्रवर्तयेत् ।
ॐकारं च ततः कृत्वा भूमिं स्पृष्ट्वा विरामयेत् ॥
अन्यथा विपरीतं स्याद्ब्रह्म तन्नात्र संशयः ।

पैठीनसिः

स्वाध्यायमहरहः प्रयुञ्जानः कर्णावपिधाय पञ्चाक्षराण्यनुजप्य मस्तकेन पादावालभ्याभिवादयेत् । अनालभ्य गुरुपत्न्याम् ॥

'पञ्चाक्षराणि' भूर्भुवःस्वरित्येतानि ।

संवर्तः

हस्तौ सुसंहतौ कृत्वा धार्यौ जानूपरि स्थितौ ।
गुरोरनुज्ञातं कुर्यात् पठन्नान्यमतिर्भवेत् ॥

आपस्तम्बः—[१, १३, ६–८]

ॐकारः स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत । विकथां चान्यां कृत्वैवं लौकिक्या वाचा व्यावर्तते ब्रह्म । यज्ञेषु चैतदादयः प्रसवाः ॥

'विकथां चान्यां कृत्वा' इति, विकथा ऽध्ययनविजातीया कथा। 'एतदादि' ॐकारादि। एवं 'लौकिक्या वाचा व्यावर्तते ब्रह्म' इति, विजातीयकथया लौकिक्या वाचा संसृष्टो वेदः पुनः प्रणवपूर्वकवेदपाठे व्यावर्तते। लौकिक्या वाचा एवं विविक्तो भवतीत्यर्थः।

हारीतः

अथ ब्राह्मणकर्मधर्मवृत्त्युपसर्गान्निरूपयिष्यामः। सर्वश्रावणं ब्रह्मतर्कणमादेशनं च्छन्दसामनुपचारो नाम्नोपाध्यायाध्ययनयो रहस्यख्यापनमनुयोगो ग्रन्थभृताम्। अव्रताध्ययनमनियमाध्ययनमगुरुशुश्रूषाध्ययनं क्रयाध्ययनं गुरुद्वेषणमित्यध्ययनस्य। संकरसंकीर्णासंव्यवहार्याध्ययनं भृतकाध्ययनं इत्यध्याप्यस्य। सर्वेषामनुविद्रुतवाचनं प्रकीर्णवाचनमद्रुतवाचनमक्षरवर्णपदपदार्धविहीनं विपर्यस्तमनाम्नातमविच्छिन्नमसमाप्तमप्रतिष्ठितं चेति जप्यस्यैते। ब्रह्मोपसर्गाद्यैरुपस्पृष्टं ब्रह्म तेषामवीर्यमतेजस्कमसिद्धमसमृद्धार्थमनायुष्कमदैवमस्वर्ग्यमफलं भवति। तस्मादेतान् धर्मान् धारयन्नधीयीताध्यापयेज्जपेत्। एवं ब्रह्मोपसर्गैर्विमुक्तानि च्छन्दांस्यधीयन् स वै पूतः समृद्धार्थः सर्वान् कामानवाप्नुयात्।

उपसर्गैर्विमुक्तानां योऽधीते यं क्रतुं द्विजः।
तेन तेनेदं भवति प्रजापतिवचो यथा॥

'ब्राह्मणकर्मधर्मवृत्ति' इति। ब्राह्मणकर्मणीव ते धर्मवृत्ती चेति कर्मधारयः। तत्र धर्मोऽध्ययनम्। 'वृत्तिः' स्वाध्यायाध्यापनम्। 'उपसर्गाः' उपद्रवाः। 'सर्वश्रावणं' सर्वैः

शूद्रादिः । 'ब्रह्मतर्केणं' कुतर्केणं वेदस्याप्रामाण्यापादनम् । 'आदेशनं' एतदनुपसन्नविषयम् । 'अनुयोगो' अत्रास्थाने प्रश्नः । एते ग्रन्थभृतामुपसर्गाः । 'व्रतानि' योगाभ्यासादीनि वेदाध्ययार्थानि । 'नियमाः' अध्ययनार्थमरण्यावस्थानादयः । 'क्रयाध्ययनं' एतावता धनेनैतावत्पठेयेति व्यवस्थयाध्ययनम् । 'संकरो' अनूढाजातः । 'संकीर्णः' पातकसंसृष्टः । 'संव्यवहारो' लोकपङ्क्तिप्राधान्यम् । 'सर्वेषां' ग्रन्थभृदध्येत्रध्यापकानाम् । 'प्रकीर्णं' अतिविलम्बितम् । 'अद्रुतं' उच्चैरत्वरितम् । 'अक्षराणि' एकारादीनि । 'वर्णाः' ककारादयः । 'विपर्यस्तं' भ्रान्तम् । 'अनाम्नातं' अत्रापश्रुत्याधीतम् । 'अविच्छिन्नं' त्रैस्वर्यार्धर्चादिविच्छेदशून्यम् । 'असमाप्तं' अतित्वरयाज्जिमित्तादिजातिवर्णरहितम् । 'अप्रतिष्ठितं' असंख्यातम् । 'जप्यस्य' जपनीयस्य मन्त्रस्य । 'एते' उपसर्गाः ।

॥ १८ ॥

# अनध्यायाः

गौतमः—[१६, २२-५०]

आकालिका [निर्घात]भूमिकम्पराहुदर्शनोल्काः। स्तनयित्नुवर्षविद्युतश्च प्रादुष्कृताग्निषु। अहर्ऋतौ। विद्युति नक्तं चापररात्रात्। त्रिभागादिप्रवृत्तौ सर्वम्। उल्का विद्युत्समेत्येकेषाम्। स्तनयित्नुरपराह्णे। अपि प्रदोषे। सर्वं नक्तमार्धरात्रात्। अहर्ज्योतिः। विषयस्थे च राज्ञि प्रेते। विप्रोष्य चान्योन्येन सह। संकुलोपाहितवेदसमाप्तिच्छर्दिश्राद्धमनुष्ययज्ञभोजनेष्वहोरात्रम्। अमावास्यायां च। द्व्यहं वा। कार्तिकीफाल्गुन्याषाढी पौर्णमासी। तिस्रोऽष्टकास्त्रिरात्रम्। अन्त्यामेके। अभितो वार्षिकम्। सर्वे वर्षविद्युत्स्तनयित्नुसंनिपाते। प्रस्यन्दिनि संनिपाते त्रिरात्रम्। ऊर्ध्वं भोजनादुत्सवे। प्राधीतस्य च। निशायां चतुर्मुहूर्तम्। नित्यमेके नगरे। मानसमप्यशुचिः। श्राद्धिनामाकालिकम्। अकृतान्नश्राद्धिकसंयोगे च। प्रतिविद्यं च यान् स्मरन्ति ॥

'अहः' इति प्रहरचतुष्टयोपलक्षणम्। 'ऋतौ' वर्षासु, प्रादुष्कृताग्निसमये मेघवृष्ट्योर्दर्शनेऽहरनध्यायः। एतेनानन्तोक्तस्याकालिकत्वस्यानृतुविषयतोक्ता भवति। 'विद्युति'

वर्षासु सायंसंध्यासमये दृश्यमानायां नक्तमनध्यायः। स चापराह्नस्य त्रिभागमारभ्य सायंप्रातःसंध्यासमये विद्युति अहरपराह्नपर्यन्तमनुवर्तमानायां नक्तमनध्यायः। स चापररात्रपर्यन्तं चकारात्प्रातःसंध्यासमये विद्युति अहरपराह्णपर्यन्तमित्युक्तं भवति। 'त्रिभागादि' इति रात्रेरह्नश्च त्रिभागमारभ्य सायंप्रातःसंध्यापर्यन्तमनुवर्तमानायां विद्युति सर्वं नक्तं सर्वमहस्तत्पर्यन्तमनध्याय इति जयस्वामी। 'उल्का' इति, विद्युतीवोल्कायामनध्याय इत्येकेषां मतम्। 'स्तनयित्नुः' मेघः, असावपराह्णे भवन् विद्युत्समोऽनध्यायः। 'अपि प्रदोषे' प्रदोषेऽपि भवत् स्तनयित्नुर्विद्युद्वमनध्यायं करोति। 'अहश्चित्' इति, अहश्चेत्प्रागपराह्णादनुवर्तते मेघस्तदा दिनान्तं यावदनध्यायः। 'विषयस्थे' इति, यद्देशेऽध्येता भवति तद्देशराजनि मृतेऽनध्यायो नान्यदेशस्थे। 'विप्रोष्य च' इति, शिष्याध्यापकयोर्विप्रवासे आकालिकानध्यायस्य पूर्वप्रस्तुतत्वात्। 'संकुले' संकीर्णे। 'उपाहिते' अग्न्युत्पाते। 'श्राद्ध'ग्रहणेनैकोद्दिष्टस्याप्यु-[illegible]मेकोद्दिष्टग्रहणं प्रायश्चित्तविशेषवदाब्दिकादिपरं दोषविशेषज्ञापनार्थम्। 'यज्ञभोजने' अतिथित्वेन भोजने। 'द्व्यहं वा' इति प्रतिपद्ग्रहणार्थम्। 'कार्तिकीपौर्णमासी' इत्यनध्ययने प्राप्ते पुनर्वचनं दोषातिशयकथनार्थम्। 'तिस्रोऽष्टका' इति, आग्रहायिण्या ऊर्ध्वम्। 'अन्त्यामेक' इति, अन्त्यामष्टकायां त्रिरात्रमनध्याय इत्येके मन्यन्ते। येषामेकस्यामष्टकायामष्टिकाकर्म तद्विषयमिदम्। 'प्रस्यन्दिनि' वर्षाभ्योऽन्यत्र। 'प्राधीतस्य' प्रथममध्येतुं प्रवृत्तस्य, भोजनादूर्ध्वमनध्याय इत्यनुषङ्गः। 'प्रतिविद्य' इति, याननध्या-

यान्पारंपर्येण स्मरन्ति तेष्वपि तेष्वपि नाध्येतव्यम्। यथा ऋग्वेदे प्रकृताख्यस्याध्यायस्य भोजनादूर्ध्वमनध्ययनम्।

पैठीनसिः

नीललोहितप्रादुर्भावे।

'रात्राविन्द्रधनुर्दृष्ट्वा' इत्यत्रैव पूर्वमुक्तत्वादह्नि नीललोहितेन्द्रधनुःप्रादुर्भाव इह अहोरात्रामनध्ययनम्।

पुनः पैठीनसिः

शुक्लचतुर्दश्यां सर्वासु चाष्टमीषु पुनर्नक्तमनध्यायोऽष्टकावर्जम्।

बौधायनः—[१, २१, ६]

देशपतिश्रोत्रियैकतीर्थप्रायणेष्वहोरात्रमनध्यायः।

'देशपतिः' सैनिकादिः, राज्ञि याज्ञवल्क्येन त्रिरात्रानध्ययनाभिधानात्। 'श्रोत्रियः' स्वशाखेतरशाखापाठपरः। तेन स्मृत्यन्तरे श्रोत्रिये त्रिरात्राभिधानं स्वशाखाध्यायिविषयम्। 'स्वशाखाश्रोत्रिये तथा' इति याज्ञवल्क्यवचनात्[1]।

पुनः बौधायनः—[१, २१, १७–१८]

शूद्रापपात्रश्रवणसंदर्शनयोश्च तावन्तं कालम्। नक्तं [illegible]वे नाधीयीत स्वप्नान्तम्॥

'अपपात्रं' पतितचाण्डालादिः।

1 याज्ञवल्क्यः, १, १४४, यथा—

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु।
उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा॥

पुनः बौधायनः—[१, ११, २२]

अन्येषु चाद्भुतोत्पातेष्वहोरात्रमनध्यायोऽन्यत्र मानसात्[1]।

गौतमः—[१६, ४७]

मानसमप्यशुचिः।

पैठीनसिः

एकादशाहे सूतके च भुक्त्वा, रात्राविन्द्रधनुर्दृष्ट्वा, वज्रपातनादाचार्यमरणादिन्द्रपातनात्सूर्यचन्द्रमसोरुपप्लवात् केतुदर्शनान्निर्घातभूमिचलनादेकैकस्मिंस्त्रिरात्रम्।

आपस्तम्बः—[१, ९, ४–१२]

निगमेष्वध्ययनं वर्जयेत्। आनडुहेन वा शकृत्पिण्डेनोपलिप्तेऽधीयीत। श्मशाने सर्वतः शम्याप्रासात्। ग्रामेणाऽध्यवसिते क्षेत्रेण वा नानध्यायः। ज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत। श्मशानवच्छूद्रपतितौ। समानागार इत्येके। शूद्रायां तु प्रेक्षण[प्रतिप्रेक्षणयोरेवा]नध्यायः। तथान्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने॥

'निगमाः' चत्वराः। 'शम्या' यज्ञायुधविशेषः। 'प्रासः' प्रक्षेपः। 'सर्वतः' सर्वासु दिक्षु। 'ग्रामेणाध्यवसिते क्षेत्रेण वा' ग्रामतां क्षेत्रतां च गते। 'ज्ञायमाने' श्मशानत्वे प्रत्यभिज्ञायमाने। 'प्रेक्षणप्रतिप्रेक्षणे' अन्योन्य-

1 'मानसात्' अध्ययनात्। मानसाध्ययनविशिष्ट एव। क्वचित् मानसोऽपि निषिद्धः—यथा मनुः—(४, १०९).

उदके मध्यरात्रे च विण्मूत्रे च विसर्जयेत्।
उच्छिष्टश्राद्धभुक् चैव मनसाऽपि न चिन्तयेत्॥

दर्शने। 'तथान्यस्यां' इत्यादेरयमर्थः—अधमवर्णेन मैथुनं गताया अतोऽन्योन्यदर्शनेऽनध्याय इति।

पुनः आपस्तम्बः—[१, ९, १४-१६]

अन्तःशवम्। अन्तश्चाण्डालम्। अभिनिर्हृतानां तु सीम्न्यनध्यायः॥

एतेष्वेव चण्डालादिष्वागत्य ग्रामबाह्यं गतेष्वपि तदहरनध्यायः।

पुनः आपस्तम्बः—[१, ९, २२]

[उपव्युषं]यावता वा कृष्णां रोहिणीमिति शम्याप्रासाद्विजानीयादेतस्मिन्काले विद्योतमाने सप्रदोषं [अहरनध्यायः।]

यावता कालेन शम्याप्रासादनुच्छिन्नदेशे कृष्णा रोहिणी वा गौर्ज्ञायते, एतस्मिन् काले विद्युति ज्ञायमानायां रात्रिप्रथमप्रहरसहितं दिनमनध्यायः।

हारीतः

ग्रामनगरद्वाररथ्याचत्वरत्रिसंध्यमातिष्ठन्नमेध्याशुचिश्च नाधीयीत। समूहसंततस्तनितविद्युदभिश्रवसां शीतवतोऽशनिवर्षेषु महासंभ्रमसंग्रामनगरगोब्राह्मणोपरोधान्तःशवचाण्डालपुल्कसमौष्टिकेषु तत्कालमनध्यायः॥

'ग्रामनगरद्वाररथ्याचत्वरत्रिसंध्यं' इति द्वन्द्वैकवद्भावः। अत्र चाधीतिं वर्जयेदित्यनुवर्तते। 'समूहो' नानाजातिजनमेलकः। 'संतत'शब्दो नैरन्तर्ये। संततशब्दस्तनितादिभिर्वर्षान्तैः प्रत्येकमभिसंबध्यते। 'अभिश्रवः'

शृगालानां मिलितानां दीर्घः शब्दः। शीतादयश्च संतता अनृतावनध्ययनहेतवः। 'ग्रामसंभ्रमः' ग्रामदाहादिना-जनानामाकुलता। अन्तःशवादयो यत्र। 'पुष्कसो' म्लेच्छ-विशेषः। 'मौष्टिको' मल्लः। 'तत्कालं' तावत्कालम्।

पुनः <u>हारीतः</u>

निर्घातभूमिकम्पोल्कावातादिग्दाहपांसुशोणमांसा-स्थिकेशदधिजलाङ्गारवर्षेषु शान्तिस्वस्त्ययनकृत्यभ्युदिताभि-निर्मुक्तवान्तस्कन्नग्रदुःस्वप्नदर्शनेष्वेकोद्दिष्टसूतकेष्वाद्य प्रा-यश्चित्तं कृत्वैतेषु निमित्तेषु शान्तिस्वस्त्ययनादिकरणावधि-रनध्यायः।

'अभ्युदित' इति, यस्मिन् प्रश्ने सूर्य उदेति सोऽभ्यु-दितः। यस्मिंश्च प्रश्नेऽस्तमेति सः 'अभिनिर्मुक्तः'। 'वान्तः' भुक्त्वा कृतवमनः। 'स्कन्नः' स्खलितरेताः। 'आद्य' आभिमुख्येन प्राधान्येन भुक्त्वा। अत्र चाङ्पूर्वा-ददेर्ल्यपि 'बहुलं च्छंदसि' इति बहुलवचनाज्जग्धिरादेशो न भवति। एतच्चाभ्युदितेषु निमित्तेषु प्रायश्चित्ताकरणे-ऽनध्यायः।

पुनः <u>हारीतः</u>

चैत्रश्रावणमार्गशीर्षाणामादिप्रतिपदो नित्याः।

'आदिप्रतिपदः' शुक्लप्रतिपदः। 'नित्या' इत्यनेन प्रतिपत्स्वनध्यायस्य काम्यत्वमुक्तम्।

'अधीयीत' इत्यनुवृत्तौ <u>हारीतः</u>

बलिश्राद्धमहोत्सवेषूल्कावदनध्यायः।

'बलिः' देवतोपहारः। अत्र चानध्यायेऽवधिविशेषानुपादानादहःशेषमहरनध्यायः।

पुनः आपस्तम्बः—[१, ९, २३-२६]

दहे चापररात्रे च स्तनयित्नुना। ऊर्ध्वमर्धरात्रादित्येके। गवां चावरोधे। वध्यानां च यावता वा हन्यन्ते॥

'अपररात्रे' रात्रेस्तृतीये भागे, 'दहे' अत्रापि प्रदोषे, 'अहरनध्याय' इत्येतेन संबन्धः। 'स्तनयित्नुना' शब्दवता मेघेन निमित्तेन। 'अवरोधे' प्रसभान्निरोधे। 'वध्यानां' वध्यहननपर्यन्तोऽनध्यायः।

पुनः आपस्तम्बः—[१, १०, २-४]

वैरमणो गुरुष्वाष्टाक्य औपाकरण इति त्र्यहाः। तथा संबन्धिषु ज्ञातिषु। मातरि पितर्याचार्य इति द्वादशाहाः॥

'वैरमणे' अध्ययनसमाप्तिदिने। 'गुरुषु' संस्थितेषु। 'आष्टक्ये' अष्टकायाम्। अयं च द्वादशाहानध्यायः। 'मातरि' जनन्याम्। 'पितरि' जनके। 'आचार्ये' उपनीय साङ्गसरहस्यवेदाध्यापितरि। आचार्ये तु अहरनध्ययनं गौणाध्यायविषयम्।

पुनः आपस्तम्बः—[१, १०, २०-२३]

शाखान्तरे च साम्नामनध्यायः। सर्वेषु च शब्दकर्मसु यत्र संसृज्येरन्। छर्दयित्वा स्वप्नान्तम्। सर्पिर्वा प्राश्य॥

'शाखान्तरे' पाठ्य इति शेषः। 'सर्वेषु च' इति, ताल्गीतादिशब्देषु मिलितेष्वित्यर्थः।

पुनः आपस्तम्बः—[१, १०, २७]

प्रोदकयोश्च पाण्योः ।

पुनः आपस्तम्बः—[१, ११, १–७]

काण्डोपाकरणे वाऽमातृकस्य । काण्डसमापने वाऽपितृकस्य । मनुष्यप्रकृतीनां च देवानां यज्ञे भुक्त्वेत्येके । पर्युषितैस्तण्डुलैराममांसेन च नानध्यायः । तथौषधिवनस्पतिमूलफलैः । यत्काण्डमुपाकुर्वन्ति यस्य चानुवाक्यं कुर्वीत न तत्तदहरधीयीत । उपाकरणसमापनयोश्च पारायणस्य तां विद्याम् ॥

'काण्डोपकरणे' काण्डोपक्रमे । 'मनुष्यप्रकृतीनां' इति, ये मनुष्याः सन्तः कर्मणा देवत्वमापन्नाः नन्दीश्वरादयः तेषां यज्ञे भुक्त्वाऽनध्याय इत्यर्थः । 'पर्युषितैस्तण्डुलैः' इति, तण्डुलग्रहणं प्रदर्शनार्थम् । तेन दिनान्तरं मनुष्यप्रकृतिदेवयज्ञियेषु तण्डुलादिषु भुक्तेषु मांसेन च भुक्तेन नानध्याय इत्यर्थः । 'उपाकरण' इत्यादि, 'पारायणं' आदित आरभ्यादृष्टार्थं नियमविशेषेणान्तं यावत्पठनं तद्यज्ञविद्यायाः । तामेव तदुपक्रमे समाप्तौ च नाधीयीत ।

पुनः आपस्तम्बः—[१, ११, १०–१२]

स्वैरिकर्मसु च । यथा पादप्रक्षालनोत्सादनानुलेपनानीति । तावन्तं कालं नाधीयीताध्यापयेद्वा ॥

'स्वैरिकर्म' स्वेच्छाकर्म । 'उत्सादनं' उद्वर्तनम् ।

पुनः आपस्तम्बः—[१, ११, २८–३४]

मुहूर्तं विरते वाते। सलावृक्यामेकसृक इति स्वप्नपर्यन्तम्। नक्तं चारण्येऽनग्नावहिरण्ये वा। अननूक्तं चापर्तौ छन्दसो नाधीयीत। प्रदोषे च। सार्वकालिकमाम्नातम्। यथोक्तमन्यदतः परिषत्सु॥

'अननूक्तं' अनधीतपूर्वम्। 'अपर्तौ' व्यपगते वेदाध्ययनकाले, उपाकरणादर्वागिति यावत्। 'सलावृकी' गृध्रवासिनी। 'एकसृकः' एकचरः सृगाल इति कपर्दी। एतयोः शब्दे स्वप्नपर्यन्तमनध्यायः।

पुनः आपस्तम्बः—[१, ३२, १२–१४]

अनध्यायो निशायामन्यत्र धर्मोपदेशाच्छिष्येभ्यः। मनसा वा स्वयम्। ऊर्ध्वमर्धरात्रादध्यापनम्॥

'अनध्यायः' अनध्ययनम्। 'निशायां' महानिशायाम्। 'मनसा वा' इति, मानसमर्धरात्रादध्ययनं कार्यम्।

'अनध्याय' इत्यनुवृत्तौ वसिष्ठः—[१३, ३५]

दिङ्नागपर्वतार्चाप्रपातेषूपलरुधिरपांसुवर्षेष्वाकालिकम्।

'अर्चा' प्रतिमा।

'अधीयीत' इत्यनुवृत्तौ शङ्खलिखितौ

न नगरचतुष्पथमहापथसंक्रमेषु।

तथा

न राजमहापुरुषाणां स्वर्जाते।

'महापुरुषः' उत्कृष्टचरितः पुरुषः।

तथा

न कुलमित्रेऽतीते।

तथा

नावभृथयज्ञवाटौ। नापश्रूयतः॥

यज्ञार्थं [illegible] भूमिः 'यज्ञवाटिः'। 'नापश्रूयतः' नाऽन्योन्यं महति संबाध इत्यर्थः। अन्यथा विप्लवः।

तथा

न कौमुद्याम्।

सर्वरात्रा 'कौमुदी' आश्वयुक्पौर्णमासी।

तथा

नेन्द्र[illegible]दर्शनात्।

तथा—[३०, १९-२१]

न वान्तः। न विरक्तः। नाजीर्णी।

अङ्गिराः

नाध्येतव्ये [illegible]यजुषी सामध्वनौ। कथंचिद्यज्ञेऽध्येये तदङ्गत्वात्।

मनुः—[४४, ९९]

ना[illegible]ष्टमधीयीत न शूद्रं जनसंनिधौ।

न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत् ॥

अध्ययनमित्यनुवृत्तौ देवीपुराणे

न संकीर्णजने कुर्यान्न च तस्करसंनिधौ ।
न श्मश्रुकरके रिक्ते करवादिसमावृते ॥

'संकीर्णजने' देशे । 'श्मश्रुकरो' नापितः । 'करवादिः' उलूकः ।

न श्राद्धभुक्तौ न श्रान्तो नाजीर्णो न च कामितः ।
इन्द्रोत्सवे च दुर्देशे न संक्रान्तौ तथाऽऽपणे ॥

नरसिंहपुराणे

महानवम्यां द्वादश्यां भरण्यामपि चैव हि ।
तथाक्षयतृतीयायां शिष्यान्नाध्यापयेद्बुधः ॥
माघमासे च सप्तम्यां रथाख्यायां च वर्जयेत् ।
अथापणे तथाभ्यक्तः स्नानकाले च वर्जयेत् ॥
नीयमानं शवं दृष्ट्वा महीस्थं वा द्विजोत्तम ।

'द्वादश्यां' शयनोत्थानद्वादश्याम् । 'भरण्यां' शक्रपातभरण्याम् । 'रथाख्यायां' सप्तम्याम् ।

'नाधीयीत' इत्यनुवृत्तौ शङ्खः

देवायतनवल्मीकश्मशानशवसंनिधौ ।
राजत्सु च खरोष्ट्रेषु गजेषु च हयेषु च ॥
छिद्राण्याहुर्द्विजातीनामनध्यायान्मनीषिणः ।
छिद्रेभ्यः स्रवति ब्रह्म ब्राह्मणेन यदार्जितम् ॥

छिद्रेष्वेवावतिष्ठन्ति ये केचित्पुरुषादकाः ।
तत्रस्था ब्रह्म ते घ्नन्ति ब्राह्मणैर्यदुपार्जितम् ॥

तथा

आयुः प्रजां पशून्मेधां कृत्यानि सुकृतानि च ।
अनध्यायेष्वभ्यसतो ब्रह्म व्याहरतस्तथा ॥
अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्दशी ।
हन्ति पञ्चदशी मेधां तस्मात्पर्वाणि वर्जयेत् ॥
प्रजापतिर्हि तिष्ठति सर्वविद्यास्वपर्वसु ।
तस्माद्धर्मार्थकामो वै नैताः पर्वसु कीर्तयेत् ॥

'नित्यप्रश्न'शब्दितब्रह्मयज्ञानुवृत्तौ—

आपस्तम्बः—[१, ११, १७–२०]

तस्य विधिः । अकृतप्रातराश उदकान्तं गत्वा प्रयतः शुचौ देशेऽधीयीत यथाध्यायमुत्सृजन्वाचा । मनसा वाऽनध्याये ।

मनुः—[२, १०४–१०७]

अपां समीपे नियतो नैत्यकं विधिमास्थितः ।
सावित्रीमप्यधीयीत गत्वारण्यं समाहितः ॥
वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥

'वेदोपकरणं' व्या[illegible]दे । 'होममन्त्र'ग्रहणं कर्ममात्रानुष्ठानकालीनस्तोत्रशस्त्रादे[illegible]प्रदर्शनार्थम् ।

'विद्यां प्रत्यनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम्'
इत्यापस्तम्बवचनात्[1] ।

[2]नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम् ।
ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतम् ॥
यः स्वाध्यायमधीतेऽब्दं विधिना नियतो द्विजः ।
तस्य नित्यं क्षरत्येष पयो दधि घृतं मधु ॥

इत्यनध्ययनम्

1 आप, ध. सू., १, १२. ९, यथा—"विद्यां प्रत्यनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम्" इति ।

2 'नैत्यके' जपयज्ञे ऽनध्यायो नास्ति । 'वषट्कृतं' पुण्यमेव भवति ।

॥ १९ ॥

# अथाध्येयम्

तत्र बृहस्पतिः—[सं, २२६]

[1]ब्राह्मणैर्धर्ममूलत्वं श्रुतिस्मृत्योः समं स्मृतम् ।
सदाचारस्य च तथा ज्ञेयमेतत्त्रिकं सदा ॥

शङ्खलिखितौ

न शास्त्रमफलं कुर्यात् । न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः ।

मनुः—[१२, ९५–९६]

या वेदबाह्याः श्रुतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रोक्ताः[2] तमोनिष्ठा हि ताः स्मृताः ॥
उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् ।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥

'वेदबाह्याः श्रुतयः' चैत्यवन्दनादिनोदिकाः[3] । 'कुदृष्टयः' कुदर्शनानि बौद्धादिशास्त्राणि ।

1 'ब्राह्मणो वेदमूलस्स्यात्' इति पराशरमाधवीयपाठः.

2 'वेदबाह्याः स्मृतयो' इति कुल्लूकपाठः । मेधातिथिना तु 'श्रुतयो' इति पाठः स्वीकृतः । तत्रैव मेधातिथिकुल्लूकप्रभृतिभिः 'निष्फलाः प्रेत्य' इति पाठः धृतः ।

3 'वेदबाह्याः' वेदविरुद्धाः अवेदमूलाः 'श्रुतयः' ग्रन्थसंदृब्धेषु नोदनात् 'चैत्यवन्दनेन स्वर्गो भवति' इत्याद्याः निर्ग्रन्थशोभादिसिद्धान्ताः प्रसिद्धाः । मेधातिथिः

तथा—[२, १६८]

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥

'सान्वयः' समन्तात् ।

## अथ ब्रह्मचर्यकालावधिः

देवलः

अतः परमष्टाचत्वारिंशद्वार्षिकीं वेदचर्यामधितिष्ठेत् । अशक्तश्चेद्वार्षिकीं चतुर्विंशतिवार्षिकीं द्वादशवार्षिकीं वा ।

बौधायनः—[१, २, १–६]

अष्टाचत्वारिंशद्वर्षाणि पौराणं वेदब्रह्मचर्यम् । चतुर्विंशतिं द्वादश वा प्रतिवेदम् । संवत्सरार्धं वा प्रतिकाण्डम् । ग्रहणान्तं वा । जीवितस्यास्थिरत्वात् । कृष्णकेशोऽग्नीनादधीतेति श्रुतेः ॥

'पौराणं' पुरातनैर्मन्वादिभिर्वाऽऽचरितम् । 'संवत्सरार्धं वा प्रतिकाण्डं' काण्डं काण्डं प्रति संवत्सरार्धम् । 'ग्रहणान्तं' इति, ब्रह्मचर्ये 'ग्रहणान्तं वा' इत्यत्र हेतुः 'जीवितस्यास्थिरत्वात्' इति ।

याज्ञवल्क्यः—[१, ३६]

[1]प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ।
ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥

1 वी. मि. सं., ५६६.

मनुः—[२, ६५]

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥

ब्रह्मपुराणे

दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः ।
गोत्रान्मातृसपिण्डाद्वा विवाहो गोवधस्तथा ।
नराश्वमेधं मद्यं च कलौ वर्ज्यं द्विजातिभिः ॥

## अथाचार्याभावेऽनुकल्पः

आपस्तम्बः—[१, ७, १२-१३]

यां विद्यां कुरुते गुरौ तेऽप्यस्याऽऽचार्या ये तस्यां गुरोर्वंश्याः । यानन्यान्पश्यतोऽस्योपसंगृह्णीयात्तदा त्वेत उपसंग्राह्याः ॥

'यां विद्यां' ऋग्वेदादिरूपां, 'गुरौ कुरुते' आचार्ये ब्रह्मचार्यातिष्ठेत्, आचार्यस्य सकाशात्प्राप्नोति, 'अस्याः' विद्यायाः आचार्याः अस्यापि ये आचार्याः तद्वंश्याः, तेऽपि 'अस्य' ब्रह्मचारिणः आचार्याः । 'यान्' इति, 'अस्य' ब्रह्मचारिणः 'पश्यतः' सतः 'यानन्यान्' नत्वा गुरुः 'उपसंगृह्णीयात्' 'तदा तु' एवंकाले 'एते' उपसंग्राह्याः ।

पैठीनसिः

ब्रह्मचर्यस्या समाप्तेः मृतश्चेदाचार्यो गुरुवृत्तिं समस्तां पुत्रे वर्तयेत् । अविद्यमाने पुत्रे भ्रातरि वसेत् ।

इति सान्धिविग्रहिक भट्टहृदयधरात्मज श्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ आचाराख्ये ब्रह्मचारिकाण्डे उपकुर्वाणकः ।

॥ २० ॥

# अथ चातुराश्रम्यव्यवस्था

तत्र वसिष्ठः—[७, १-१७]

चत्वार आश्रमाः [1]ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाः। तेषां वेदं समधीत्य वेदौ वेदान्वाऽविशीर्णब्रह्मचर्यो यमिच्छेत्तमाविशेत्। ब्रह्मचार्याचार्यं परिचरेदाशरीरविमोक्षणात्। आचार्ये च प्रेतेऽग्निं परिचरेत्। विज्ञायते ह्यग्निराचार्यस्तवेति। संयतवाक्। चतुर्थषष्ठाष्टमकालभोजी भैक्ष्यस्य। गुर्वाधीनः। जटिलः शिखाजटो वा। गुरुं गच्छन्तमनुगच्छेत्। आसीनं चेत्तिष्ठन् शयानं चेदासीन उपासीत। आहूताध्यायी। सर्वं लब्धं निवेद्य तदनुज्ञया भुञ्जीत। खट्वाशयनदन्तप्रक्षालनाञ्जनाभ्यञ्जनवर्ज्यं स्थानासनशीलः त्रिरह्नोऽभ्युपेयादप इति॥

'अविशीर्णब्रह्मचर्यः' अविप्लुतब्रह्मचर्यः। 'संयतवाक्' मौनी। 'चतुर्थषष्ठाष्टमकालभोजी' इति, औत्सर्गिकं यावद्भोज्यं तदपेक्षया चतुर्थादिकालसंख्या। 'त्रिरह्नोऽभ्युपेयादप' इति, त्रिषवणस्नानं कुर्यादित्यर्थः।

1 द्विविधो ब्रह्मचारी। उपकुर्वाणको नैष्ठिकश्चेति। उपकुर्वाणकः गार्हस्थ्याभिकामः—वी. मि. सं., पृ. ५५१.

बौधायनः

ब्रह्मचारिणोऽत्यन्तमात्मानमुपसंगृह्याऽऽचार्यकुले श्राम्यन्ति। एके सवनेषूपस्पृशन्तो वन्येनान्येनैकाग्निं जुह्वानाः। संन्यस्यैके कर्माण्यनग्नयोऽनिकेताः। कौपीनाच्छादनाः। वर्षास्वेकस्थाः। परिश्रुताभिरद्भिः कार्यं कुर्वाणाः। काषायवासाः। सन्नमुसले व्यङ्गारे निवृत्तशरावसंपाते भिक्षेत। वाङ्मनःकर्मदण्डैर्भूतानामद्रोही। पवित्रं बिभृयाच्छौचार्थम्। उद्धृताभिरद्भिः कार्यं कुर्यात्। अपविध्य वैदिकानि कर्माण्युभयतः परिच्छिन्ना मध्यमं पदं संश्लिष्यामह इति वदन्तः॥

'ब्रह्मचारिणो' नैष्ठिकाः 'आत्मानं' शरीरं 'उपसंगृह्य' संनिरुध्य 'आचार्यकुले श्राम्यन्ति' इति संबन्धः। 'श्राम्यन्ति' तपः कुर्वन्ति। 'एके' वानप्रस्थाः। 'सवनेषु' प्रातरादिषु। 'उपस्पृशन्तः' स्नास्यन्तः। 'वन्येन' नीवारादिना। 'एके' सन्यासिनो योगनिष्ठाः। 'कर्माणि' अग्निसाध्यानि। 'संन्यस्य' परित्यज्य। 'कौपीनं' कुत्सितं प्रजननं तावन्मात्रे 'आच्छादनं' येषां ते कौपीनाच्छादनाः। 'एकस्थाः' एकत्र वसन्तः। 'परिश्रुताभिः' जलपवित्रगालिताभिः। 'कर्माणि वैदिकानि' च जपस्वाध्यायादीनि। 'अपविध्य उभयतः परिच्छिन्नाः' सुखदुःखमानावमानादिप्रकारद्वंद्वात्प्रत्यक्कृताः। 'मध्यमं पदं' सुखदुःखसन्निभमैश्वरं प्र[illegible]तिपुरुषयोर्वा मध्यवर्ति ब्रह्माख्यं पदं वदन्तः श्राम्यन्तीति संबन्धः।

लघुव्यासः

नैष्ठिको वा मुनिर्वापि प[illegible]रिव्राज[illegible] एव वा।
यमिच्छेदाश्रमं यत्र [illegible] संयतः॥

शङ्खलिखितौ

ऊर्ध्वरेतस एवैके पारिव्राज्यमिच्छन्ति न गृहस्थवानप्रस्थयोः । पूर्वस्यानुच्छेदादुभयधर्मोपपत्तेरुत्तरस्यानपेक्ष्यत्वादैकाश्रम्यम् ॥

'ऊर्ध्वरेतस एव' इत्यत्र हेतुः 'पूर्वस्य' इत्यादि। तस्याचार्यपूर्वस्योर्ध्वरेतस्त्वस्य पारिव्राज्येऽप्यनुच्छेदात् 'उभयधर्मोपपत्तेः' उभयत्र प्रथमचतुर्थाश्रमयोः ये धर्माः यमनियमादयः तेषामुपपत्तेः संभवात् 'उत्तरस्य' गार्हस्थ्यस्य परिपक्वकषायेणानपेक्षणीयत्वात् 'ऐकाश्रम्यं' आद्यान्तिमयोराश्रमयोरेकरूपत्वम् ।

पुनः शङ्खलिखितौ

चतुर्विंशकमष्टाचत्वारिंशकं वा ब्रह्मचर्यम् । तद्गुरवे समाधेयम्। नैष्ठिकमात्मज्ञानसंस्थम्। पूर्वोत्तरयोरेकज्ञानमनारम्भत्वात् । आचार्यश्रान्तः यन्त्री शुद्धिमाप्नोतीत्येवं ह्याह ।

तपसा भावितात्मानः सत्यधर्मपरायणाः ।
ब्रह्मणैवोपसंपन्ना ब्राह्मणा ब्रह्मलौकिकाः ॥
न च्यवन्ते पुनस्तस्माच्छुद्धा धर्मतपोमयाः ।
लोकास्तेजोमयास्तेषां ये चरन्त्यूर्ध्वरेतसः ॥

'चतुर्विंशकं' चतुर्विंशतिपरिमितम् । एवं 'अष्टाचत्वारिंशकम्'। 'गुरवे' गुर्वाराधनाय । 'समाधेयं' अनुष्ठेयम् । 'आत्मज्ञानसंस्थं' आत्मज्ञानप्रतिष्ठितम् । 'पूर्वोत्तरयोः' आद्यचतुर्थयोः । 'एकज्ञानं' एकत्वेन ज्ञानम् । 'अनारम्भत्वात्' [illegible]ध्यारम्भयज्ञपरत्वाभावात् ।

'यन्त्री' यन्त्रवान्, यन्त्राणि यमनानि चतुर्थकालभोजनादीनि।

हारीतः

सर्वेष्वाश्रमेष्वाचारन्तः पुण्यलोका भवन्ति। सैषाऽऽश्रमनिश्रेणिर्यया देवा स्वपितरश्चामृतत्वमगच्छन्। प्रथमपुण्यो ब्रह्मचारी ब्रह्मचर्यनिष्ठो ब्रह्मसिद्धिमवाप्नोति। द्विपुण्यो गृहाश्रमनिष्ठो भूयो महिमानं ब्रह्मलोकमवाप्नोति। आश्रमानुपूर्वो वानप्रस्थः प्रतिष्ठोभयस्तरमहिमानं ब्रह्मलोकम्। आश्रमादाश्रमं गच्छन् भिक्षुराशु सिद्धिं विन्देत। नैष्ठिको ब्रह्मचारिणां श्रेष्ठतमः। यायावरो गृहस्थानाम्। आनुप्रस्थिको वानप्रस्थानाम्। चातुराश्रम्यसिद्धो यतीनाम्॥

'द्विपुण्यः' द्वे पुण्ये आश्रमद्वयकर्मणी यस्य स तथा। 'सिद्धिः' ब्रह्मप्राप्तिः।

मनुः—[६, ८९-९१]

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः॥
[सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः।]
यथोक्तकारिणं विप्रं नयन्ति परमां गतिम्॥
सर्वेषामपि चैतेषां वेदस्मृतिविधानतः।
गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि॥

विष्णुपुराणे—[३, १०, १३-१५]

गृहीतविद्यो गुरवे दत्वा च गुरुदक्षिणाम्।
गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम्॥

ब्रह्मचर्येण वा कालं कुर्यात् स ;ल्पपूर्वकम् ।
गुरोः शुश्रूषणं कुर्यात्तत्पुत्रादेरथापि वा ॥
वैखानसो वापि भवेत् परिव्राडथवेच्छया ।

प्रजापतिरित्यनुवृत्तौ हारीतः

स चतुर्धात्मानं विधाय ब्रह्मचर्येण ब्रह्मयज्ञैस्तपसा ध्यानेन चात्मानमश्राम्यत्तदाश्रमा अभवन् ।

हारीतः

अनाश्रमी व्यपेतश्च आश्रमी च निरर्थकः ।
मिथ्याश्रमी च सर्वे ते निरयं यान्ति मानवाः ॥

'अनाश्रमी व्यपेतः' अनाश्रमी सन्यो व्यपेतो भूतः । 'निरर्थकः' स्वाश्रमोक्तकर्मानुष्ठानरहितो लिङ्गमात्रधारी । 'मिथ्याश्रमी' दम्भार्थमाश्रमधर्मान् योऽनुतिष्ठति ।

तथा

ब्रह्मचर्यं च सर्वेषां रेतोधारणमुच्यते ।
ऋतुकालं गृहस्थानां नित्यं वा पर्ववर्जनम् ॥

'ऋतुकालं' ऋतुकाल एव गमनं यत्तद्गृहस्थानां ब्रह्मचर्यमुच्यत इत्यर्थः ।

तथा

मन्त्रद्रव्याग्निसंयोगं यज्ञमार्गं मनीषिणः ।
आत्मयज्ञस्तु भिक्षूणामात्मन्येव व्यवस्थितः ॥
व्रतोपवासयन्त्रादि तयोर्नित्यं प्रशस्यते ।
त्रिसत्यपूतं भिक्षूणां [illegible] मनीषिणः ॥

'आत्मयज्ञः' आत्म[illegible]नमेवाभ्युदयल[illegible]णयज्ञकार्य[illegible]ः । 'व्रतं' शास्त्रतोऽग्नीन्धनादि ।

यमः

ब्रह्मचारिणामग्नीन्धनादिर्नियमः । गृहिणः पञ्चमहायज्ञादिः । वनवासिनो वन्याशादिः । भिक्षोरहंकारपरिग्रहत्यागप्राणायामकृच्छ्रादिः त्रिसत्याद्वाङ्मनःकर्मभिः परपीडासंन्यासो देवताद्यर्थमपि वृत्ते । उपादानपरस्य याञ्चादिरहिंसया ॥

'अहिंसया' अपीडनया । अतो देवतापूर्वमनादिकृताश्रमत्रयादूर्ध्वं भिक्षोश्चतुर्विधं हिंसावर्जनं न्याय्यम् ।

तथा

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ।
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥
अनेन विधिना यो हि आश्रमानुपसेवते ।
स सर्वलोकान्निर्जित्य ब्रह्मलोकाय कल्पते ॥ इति ।

दक्षः

यो गृहाश्रममास्थाय ब्रह्मचारी भवेत्पुनः ।
न यतिर्न गृहस्थश्च स सर्वाश्रमवर्जितः ॥
अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः ।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते द्विजः ॥
जपे होमे तथा दाने स्वाध्याये च रतः सदा ।
नासौ फलमवाप्नोति कुर्वाणोऽप्याश्रमच्युतः ॥
त्रयाणामानुलोम्यं स्यात्प्रातिलोम्यं न विद्यते ।
प्रातिलोम्ये त्वधो याति न तस्मात्पापकृत्तमः ॥

'आनुलोम्यं' ब्रह्मचारी गृहस्थो वानप्रस्थो यतिश्चेत्ययं क्रमः । 'प्रातिलोम्यं' उक्तवैपरीत्यम् ।

॥ २१ ॥

## नैष्ठिकप्रकरणम्

अथ हारीतः

द्विविध एव ब्रह्मचारी भवति। उपकुर्वाणको नैष्ठिकश्च। तयोरुपकुर्वाणको व्याख्यातः। निष्ठां चेद्गच्छेदाशरीरनिपाताद्गुरुमन्वासीत, तदभावे गुरुपत्न्यां, तदभावे गुरुपुत्रे। गुरुपुत्राभावेऽग्निमेव परिचरेत्। यज्ञियाः समिध आहृत्य संमार्जनोपलेपनोद्बोधनसमूहनसमिन्धनपर्यग्निकरणपरिक्रमोपस्थानहोमस्तोत्रनमस्कारादिभिरग्निं परिचरेत्। नाग्निमधितिष्ठेत्। न पद्भ्यां कर्षेत्। न मुखेनोपधमेत्। नापश्चाग्निं च युगपद्धारयेत्। नाजीर्णभुक्त उच्छिष्टो वाभ्यादध्यात्। नाभ्यादधेद्वातिक्रामेत्। न निष्ठीवेत्। विविधचरुहविर्दानविशेषैराग्नेयैरहरहरग्निं समिन्धेत्। आमन्त्र्य गच्छेत्। आहृत्य निवेदयेत्। तन्मनाः शरीरोपरमान्ते ब्रह्मणः सायुज्यं गच्छति[1]। सन्यस्य वा त्रयोदशगुणं ब्रह्मचर्यम्। अष्टाङ्गं ब्रह्मचर्यमेके। विष्णुनिष्ठाः परममचलं पदमाप्नुवन्ति भवन्त्येके।

अनेन विधिना यो हि ब्रह्मचर्यं निषेवते।
सर्वलोकान् विनिर्जित्य ब्रह्मलोकाय कल्पते॥

1 एतत्पर्यन्तं हारीतवचनं अपरार्कभाष्ये (पृ. ७१) दृश्यते.

क्षीरं पिबन्ति मधु ते पिबन्ति
सोमं पिबन्ति घृष्ट तेन सार्धम् ।
मृत्योः पुरस्तादमृतं भवन्ति
ये ब्राह्मणा ब्रह्मचर्यं चरन्ति ॥

गु[illegible]ेऽर्थज्ञानपर्यन्तं स्वाध्यायस्वरूपं प्रयोजनं कुर्वाणः वसतीति 'उप[illegible]ः'। 'उद्बोधनं' अग्नेः प्रकटीकरण[illegible]। 'समूहनं' विकीर्णस्याग्नेः कूटीकरणम्। 'समिन्धनं' प्रज्वालनम्। 'परिक्रमणं' प्रदक्षिणीकरणम्। 'उपस्थानं' तद्गतवाङ्मनस्त्वेन समीपेऽवस्थानम्। 'आदि' शब्दो जय जयेत्यादिशब्दप्रयोगैरित्यर्थः। 'अजीर्णभुक्तः' न जीर्णं ह्यस्तनं भुक्तं यस्य स तथा। 'अभ्यादध्यात्' मन्त्रपूर्वकं समिदाधानं कुर्यात्। 'चरुः' अनाश्रावितमूष्मपक्वमन्नम्। 'हवींषि' आज्याधानसक्त्वामिक्षादीन्यक्षारलवणानि। एतान्युद्देशेनाग्नौ प्रतिक्षिपेत्। समिन्धनमप्येवमेव सिद्धं भवति। 'आमन्त्र्य गच्छेत्' आचार्यं पृष्ट्वा गच्छेत्। 'तन्मनाः' गुरुगतचित्तः। 'त्रयोदशगुणं' [illegible]निवासप्रवेशाङ्गसंगस्पर्शदृष्टिमेलनसंदर्शनतिर्यगालोकनसंकथनप्रश्नतद्वचनाकर्णनदूरावेक्षणनिकटभ्रमणतज्जनप्रियवचनं चैते त्रयोदशगुणाः।

देवलः

ब्रह्मचारिधर्मो ब्रह्मचर्यं स्वाध्यायावश्यकब्रह्मसूत्रा[illegible]ण्डिकामौञ्जीमेखलाधारणं सकृद्भोजनमस[illegible]दवगाहनमुभयकालमग्निहोत्रं संध्योपस्थानमलुप्त[illegible]केशनखत्वग्गन्धमाल्यस्नेहाभ्यञ्जनवेषाल[illegible]रच्छत्रोपा-

नद्वाहनलङ्घनप्लवनधावनचिकित्साज्योतिर्लक्षणवास्तुविद्या-मङ्गलपौष्टिकशान्तिकर्मगान्धर्वसङ्घसमयबन्धनशिल्पलेख-नकारुकर्मवेश्मक्षेत्रद्रव्यधनधान्यपरिच्छेदशस्त्रद्यूतव्यवहा-राज्ञाभावलीलापरिहासप्रणयकुहकविस्मापनविडम्बनवि-वादोत्सेकपरिदेवनरोदनवस्तिनस्तपादोद्वर्तनवर्जनम्। गुरोः पूर्वोत्थानं जघन्यसंवेशनं प्रमाणसंदिष्टकरणमिष्टशुश्रूषा नि-त्योपासनमपचितिः। तदभावे तत्पुत्रेऽस्य दारेषु चानुवृत्ति-रामरणादिति ॥

'कुण्डिका' कमण्डलुः। 'लुप्तं छिन्नम्। 'वेषः' मण्डनम्। 'प्लवनं' उत्प्लवनम्। 'लक्षणवास्तुविद्या' सा शूद्रविद्या। 'सङ्घः' समूहः। 'समयः' सङ्केतः, 'बन्धनं' तन्नियमः। 'कारवः' सूपकाराद्याः। 'भावः' शृङ्गारादि-रसनिदानमनोविकारः। 'उत्सेको' दर्पः। 'वस्तिः' निरू-हादिरूपा। 'नस्त' इति नस्यं लक्ष्यते। 'प्रमाणसंदिष्ट-करणं' प्रमाणेन संदिष्टस्य करणं, न भ्रान्त्यादिनेष्टशुश्रुषा। अपचितिः पूजा।

<u>शङ्खलिखितौ</u>

कामतो वास्मिन्नेव स्वाध्यायः। प्रयोजनापेक्षी गायत्री-रुद्रकल्पोपनिषद्भिरतः। सवनोपस्पर्शी शेषवृत्तिसंबन्ध-त्वेनोक्तमुपासीत। आत्मरतिर्गुरुकुलनिष्ठ आत्मनिष्ठो वा। सोऽमृतत्वमाप्नोति ॥

'प्रयोजनापेक्षी' आचार्यस्येति शेषः। 'रुद्रकल्पः' शतरुद्रियविधानम्। 'सवनोपस्पर्शी' त्रिकालस्नायी।

मनुः—[३, २४२–२४४]

नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् ।
ब्राह्मणे चाननूचाने काङ्क्षन् गतिमनुत्तमाम् ॥
यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले ।
युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥
आसमाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम् ।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम् ॥

तथा—[३, २४७–२४९]

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥
एषु त्वविद्यमानेषु स्थानासनविहारवान् ।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥
एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतम् ।
स गच्छत्युत्तमं स्थानं न चेहाजायते पुनः ॥

'आचार्यप्रेतेऽनुबन्ध' इत्यनुवृत्तौ विष्णुः

गुरुदारेषु सवर्णेषु वा ।

बृहस्पतिः—[संस्का. २५९–२६१]

उपकुर्वाणकस्यैतत्समादिष्टं मया व्रतम् ।
अधुना संप्रवक्ष्यामि नैष्ठिकस्य समासतः ॥
संध्याग्निकार्यं स्वाध्यायं भैक्ष्याधःशयनं दमः ।
प्राङ्निषिद्धपरित्यागः मनोभवगुरोर्हितम् ॥
गुर्वभावे तु तद्दारसुतज्ञात्यग्निसेवनम् ।
आमृत्योर्नैष्ठिकः कुर्वन् ब्रह्मलोकमवाप्नुयात् ॥

॥ २२ ॥

# अथ गुरुदक्षिणास्नाने

तत्र व्यासः

गुरुशुश्रूषया विद्यां संप्राप्य विधिवद्विजः ।
स्नायीत गुर्वनुज्ञातो दत्वास्मै दक्षिणां च गाम् ॥

याज्ञवल्क्यः—[१, ५१]

गुरवे तु वरं दत्वा स्नायाच्च तदनुज्ञया ।
वेदव्रतानि वा पारं नीत्वाप्युभयमेव वा ॥

'वरो' गवादिः ।

मनुः—[२, २४५–२४६]

न पूर्वं गुरवे किंचिदुपकुर्वीत धर्मवित् ।
स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥
क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमन्ततः ।
धान्यं शाकं च वासांसि गुरवे प्रीतिमाहरन् ॥

'प्रीतिं' प्रियम् ।

आपस्तम्बः—[१, ७, १९–२५]

कृत्वा विद्यां यावतीं शक्नुयाद्वेददक्षिणामाहरेद्धर्मतो यथाशक्ति । विषमगते त्वाचार्य उग्रतः शूद्रतो

वाऽऽहरेत्। सर्वदा शूद्रत उग्रतो वाऽऽचार्यार्थस्याहरणं धर्ममित्येके। दत्वा वा नानुकथयेत्। कृत्वा च नानुस्मरेत्। आत्मप्रशंसां परगर्हामिति वर्जयेत्॥

'यावतीं विद्यां शक्नुयात्' इति, वेदं वेदान्वा तावतीं गृहीत्वेत्यर्थः। 'वेददक्षिणां' वेदार्थां दक्षिणाम्। 'उग्रः' क्षत्रियेण शूद्रायां जातः। तत्क्षात्रवाद्ब्राह्मण्यां इति कपर्दी। 'इति' हेतोः, यत् स्वदक्षिणादानं प्रशंसायां, परदक्षिणादानं गर्हायां च, अनुकथनस्मरणे न स्याताम्। प्रशंसां वा गर्हां वा वर्जयेदित्यर्थः।

वसिष्ठबौधायनौ—[बौधा. ४, ४, १०]

[1]सहस्रं दक्षिणा ऋषभैकादशं गुरुप्रसादो वा।

'सहस्रं' इति गावः। 'ऋषभैकादश' इति सहस्रानाशक्ताविति भर्तृयज्ञः।

लघुहारीतः

एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा त्वनृणी भवेत्॥

अत्रार्थज्ञानं श्रुत्वानन्तरं लघुव्यासः

शक्त्या समाप्य यो विद्यां न्यायतस्तु तदर्थवित्।
सम्यग्व्रतानि संसेव्य समावर्तनमर्हति॥

ब्रह्मचर्यं समाप्य यन्मन्त्रवत् सुगन्धादिना स्नानं तत् 'समावर्तनम्'।

1 'सहस्रं' शतस्वर्णं इति गोविन्दस्वामी (पृ. २७४).

हारीतः

त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति। यः समाप्य वेदमसमाप्य व्रतानि समावर्तते स विद्यास्नातकः। यः समाप्य व्रतान्यसमाप्य वेदं समावर्तते स व्रतस्नातकः। उभयं समाप्य समावर्तते स विद्याव्रतस्नातक इति। तदेवं विद्यास्नातोऽलङ्कारादीनि गृह्णीयात्। यथार्थं चैलान्बिभृयात्॥

'यथार्थं' यथाप्रयोजनम्।

आपस्तम्बः—[१, ३०, १–४]

विद्यया स्नातीत्येके। तथा व्रतेनाष्टाचत्वारिंशत्परिमाणेन। विद्याव्रतेन चेत्येके। तेषु सर्वेषु स्नातकवद्वृत्तिः।

पुनः आपस्तम्बः—[२, १४, ५]

अधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्ननग्निपक्ववृत्तिरच्छायोपगतः स्थानासनिकः संवत्सरमेतद्व्रतं चरेत्। एतदष्टाचत्वारिंशत्संमितमित्याचक्षते।

दन्तप्रक्षालनादिमन्त्रानभिधाय—

पारस्करः—[२, ६, ३२]

दन्तप्रक्षालनादीनि नित्यमपि। वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः[1]॥

1 दन्तप्रक्षालनमादौ येषां पुष्पादानादीनां तानि दन्तप्रक्षालनादीनि 'नित्यमपि' सर्वदा मन्त्रवन्ति स्नातकस्य भवन्ति। वाससी च छत्रं च उपानहौ च 'वासश्छत्रोपानहं', चकाराद्दण्डोऽपि। एतानि चेद्यदि 'अपूर्वाणि' नूतनानि ध्रियन्ते गृह्यन्ते तदा मन्त्रो भवति तद्ग्रहणे। (हरिहरः).

बौधायनः—[१, ५, १–६]

अन्तर्वास उत्तरीयवान्। वैणवं दण्डं धारयेत्। सोदकं च कमण्डलुम्। द्वियज्ञोपवीती। उष्णीषमजिनोत्तरीयमुपानहौ छत्रं च॥

'अन्तर्वासः' परिधानवस्त्रम्। 'उत्तरीयं' उपरिवस्त्रम्। 'अजिनोत्तरीयं' वाससा सह वैकल्पिकम्, 'अजिनं वासो वा दक्षिणत उपवीती' इति श्रुतेः।

मनुः—[४, ३५]

क्लृप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः।
स्वाध्याये चैव युक्तः स्यान्नित्यमात्महितेषु च॥

'क्लृप्तं' छिन्नम्।

तथा—[४, ३६]

यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले।

'वेदो' दर्भमुष्टिः। 'रौक्मे' सौवर्णे।

वसिष्ठः—[१२, ३९]

न बहिर्मालां धारयेत्। अन्यत्र रुक्ममय्याः।

हारीतः

नागन्धां रक्तां वा स्रजमाबध्नीयादन्यत्र काञ्चनकमलकुवलयेभ्यः।

'कुवलयं' उत्पलम्।

आपस्तम्बः

सुस्रग्गन्धलेपनः स्यात्।

जाबालिः

नित्यं शुचिः सुगन्धिः स्यात् शुक्लाम्बरधरः क्षमी ।
स्वानुष्ठानपरो गेही सपत्नीको व्रतांश्चरेत् ॥

गौतमः—[९, १-७]

स विधिपूर्वं स्नात्वा भार्यामधिगम्य [यथोक्तान्] गृहस्थधर्मान् प्रयुञ्जान इमानि व्रतान्यनुकर्षेत्स्नातकः। नित्यं [शुचिः] सुगन्धिः स्नानशीलः। सति विभवे न जीर्णमलवद्वासाः स्यात्। न रक्तमुल्बणमन्यधृतं वासो बिभृयात्। न स्रगुपानहौ। निर्णिक्तमशक्तौ। न रूढश्मश्रुरकस्मात् ॥

कारणव्यतिरेकेण न दीर्घश्मश्रुः स्यादित्यर्थः।

मनुः—[४, ६६]

उपानहौ च वासश्च धृतमन्यैर्न धारयेत्।
उपवीतमलङ्कारं स्रजं करकमेव च ॥

'करकं' कमण्डलुः* ।

[इति कृत्यकल्पतरौ ब्रह्मचारिकाण्डे गुरुदक्षिणास्नाने ।]

[इति महाराजाधिराज-श्रीगोविन्दचन्द्रदेव-महासान्धिविग्रहिक
श्रीभट्टहृदयधरात्मज-श्रीलक्ष्मीधरभट्टस्य कृतौ कृत्यकल्पतरौ
ब्रह्मचारिकाण्डम् ॥]

* *Brahmacāri Kāṇḍa* has been edited from a single manuscript, the only one so far discovered. It is very defective. Pandit Giridharlāl S'āstri, who compared the transcript made for me at Udaipur from

the original manuscript has made the following note at the end of the transcript:

मक्षिकास्थाने मक्षिकेति नियममनुसृत्यावलोकितम् । यत: प्रचीनप्रतिरप्यनति शुद्धेव । क्षन्तव्यम् ।

The concluding passage in the manuscript reads—

'करकं' कमण्डलुः । कुण्डिकामण्डलीशकुरुते । आचार्यस्य सकाशात् प्राप्नोति । अस्या विद्याचार्यस्यापि य आचार्या ते वंश्या तेऽप्यस्य ब्रह्मचारिणः आचार्याः । यानिति अस्य ब्रह्मचारिणः पश्यतः सतः यानन्यान् नत्वा गुरुरुपसंगृह्णीयात् तदा त्वेवं काले एते उपसंग्राह्याः । पैठीनसिः ब्रह्मचर्यस्यासमाप्तेः मृतश्चेदाचार्यो गुरुवृत्तिं समस्तां पुत्रे वर्तयेत् । अविद्यमाने पुत्रे भ्रातरि वसेत् ॥

These passages obviously form a comment on the Sūtras of Āpastamba on p. 264 *infra*, which stood with only a portion of the comment. They have accordingly been shifted to p. 264 and printed after the above Sūtras. The passage from Paiṭhīnasi also relates to the same topic, and has been printed after the above comments on Āpastamba's Sūtras on p. 264. It is evidently a case of the shifting of folia in the original from which the Udaipur Manuscript was copied.

As now printed, the last words of *Brahmacāri Kāṇḍa* are 'करकं' कमण्डलुः ॥ The usual colophons marking the termination of the *parva* and *Kāṇḍa* are missing in the manuscript. The work appears to be complete, as it stands, though it is *possible* that one or two citations are lost. Lakṣmīdhara deals with *Snātakavratāni*, on pp. 274-302 of *Gṛhastha Kāṇḍa* (G.O.S., CI., 1944).

## APPENDIX A

### *Index of Smṛti-authors or Works cited*

# APPENDIX B

## *Index of Itihāsa and Purāṇas cited*

## APPENDIX C

### *Index of Vedic Works cited*

## APPENDIX D

### *Index of Citations in the Foot-notes*

## APPENDIX E

## *Half-verse Index of Quotations*



* Indicates a prose passage.

आ

ऐ



ओ

द

प

फ



ब

भ

र



ल

ष



स

ह